साङ्ख्येन वेदोक्तभगवत्स्वरूपज्ञानेन। कर्मिणामपि श्रुत्वा ज्ञात्वा ध्यात्वा दृष्टिः। श्रावकाणां च ज्ञात्वा ध्यात्वा। साङ्ख्यानां च ध्यात्वा। तथा च गौपवनश्रुतिः —

"कर्मकृच्चापि तच्छ्रुत्वा ज्ञात्वा ध्यात्वाऽनुपश्यति। श्रावकोऽपि तथा ज्ञात्वा ध्यात्वा ज्ञान्यपि पश्यति। अन्यथा तस्य दृष्टिर्हि कथञ्चिन्नोपजायते" इति।

"अन्ये" इत्यशक्तानामप्युपायदर्शनार्थम् ॥२५॥२६॥

यावत् सञ्जायते किञ्चित् सत्त्वं स्थावरजङ्गमम्।
क्षेत्रक्षेत्रज्ञसंयोगात् तद् विद्धि भरतर्षभ ॥ २७

---

दशतालौ सप्तपादौ विद्यात् तौ च सुरोत्तमौ। यावत् पञ्चाङ्गुलोनं तद्देवमानं क्रमात् परम्। पादे त्वङ्गुलमात्रोनं तदूनं चतुरङ्गुलम्। यावद्देवोपदेवानां पादे चोनाङ्गुलं पुनः। तावन्मनुष्यमानं स्यात् ततोऽधस्त्वासुरं स्मृतम्। द्विचत्वार्यधिकं तस्मात् षण्णवत्यङ्गुलादधः। ज्ञेयमङ्गुलमानं तदुपदेवादिषु स्फुटम्। देवेष्ववरवज्ज्ञेयमृषीणां चक्रवर्तिनाम्। यावद् यावत् प्रियो विष्णोस्तावत् स्त्रीपुंस्वरूपिणः। हरेः सादृश्यमस्य स्यादनादिक्रमसुस्थिरम्" इति च ॥२५॥२६॥

"क्षेत्रक्षेत्रज्ञसंयोगात्" इत्यत्र क्षेत्रं श्रीः —"मम योनिर्महद् ब्रह्म तस्मिन् गर्भं दधाम्यहम्" इति वक्ष्यमाणत्वात्। "अव्यक्तं च महद् ब्रह्म प्रधानं क्षेत्रमित्यपि। उच्यते श्रीः सदा विष्णोः प्रिया निर्दोषचिद्घना। सा हि न व्यज्यते विष्णुरत्र क्षेति महागुणा। जीवोत्तमा च तेनैतैः शब्दैरेकाऽभिधीयते। महान् ब्रह्मा जीवमहान् परात्मप्रेरिताः क्रियाः। अहं कर्तेति येनायं जीवो मंस्यत्यसौ शिवः। अहङ्कार इति प्रोक्तो जीवाहम्मतिकृद् यतः। उमा बुद्धिरिति ज्ञेया शब्दादिज्ञानदा यतः। मतिदो मन उद्दिष्ट इन्द्रः स्कन्दोऽपि तत्सुतः। श्रोत्रं तु श्रावयंश्चन्द्रः स्पर्शो वायुसुतो मरुत्। चक्षुः सूर्यश्चक्षयति जिह्वा वारिपतिर्हृतेः। अश्विनौ घ्राणमाघ्रातेर्वागग्निर्वचनादपि। हस्तौ वायुसुतौ ज्ञेयौ मरुतौ हानिलाभयोः। पादौ तु विष्णुनाऽविष्टौ यज्ञशम्भू शचीसुतौ। पदनादेव पायुश्च भुक्तस्यैवाप्ययाद् यमः। सन्तत्युपस्थितिकृतेरुपस्थः सशिवो मनुः। विनायकस्तथाऽऽकाशो निरावृत्या प्रकाशनात्। प्रधानवायुजो भूतवायुर्नाम्ना मरीचिकः। अग्निश्च पृथिवी चैव प्रसिद्धौ वरुणो जलम्। अदनात् प्रथनाज्जन्मलय-हेतोस्तथाऽभिधाः। शब्दाद्याः पञ्च शिवजाः शब्दनात् स्पर्शनादपि। रूपणाद् रसनाच्चैव गन्धनाच्च तथाऽभिधाः। सुखं धृतिश्चेतना च सुखनाद् विधृतेरपि। चेतोनेतृत्वतश्चैव मुख्यवायुः सरस्वती। श्रीश्चेच्छा चैव सा वायोः पत्नी त्वेवं धृतिर्मता। इच्छादानात्तु सैवेच्छा स्थानभेदात्तु देवताः। पृथक् पृथक् च कथ्यन्ते लक्ष्म्याद्या उदिता अपि। दुःखद्वेषौ कलिश्चैव द्वापरो ब्रह्मणः सुतौ। प्रवरावसुराणां तौ सङ्घातश्चेतनाः परे। एतैरभिमतं यच्च तत्तन्नाम्नाऽभिधीयते। चेतनाचेतनं त्वेतत् सर्वं क्षेत्रमितीरितम्।

समं सर्वेषु भूतेषु तिष्ठन्तं परमेश्वरम् ।
विनश्यत्स्वविनश्यन्तं यः पश्यति स पश्यति ॥ २८

समं पश्यन् हि सर्वत्र समवस्थितमीश्वरम् ।
न हिनस्त्यात्मनाऽऽत्मानं ततो याति परां गतिम् ॥ २९

पुनश्च प्रकृतिपुरुषेश्वरस्वरूपं साम्यादिधर्मयुक्तमाह—यावदित्यादिना ॥२७–२९॥

प्रकृत्यैव च कर्माणि क्रियमाणानि सर्वशः ।
यः पश्यति तथाऽऽत्मानमकर्तारं स पश्यति ॥ ३०

आत्मानं चाकर्तारं यः पश्यति स पश्यति ॥३०॥

---

क्षितिरेतद् भगवतो यदतः क्षेत्रमीर्यते। क्षिणोति त्राति चैवैतदतो वा क्षेत्रमुच्यते। क्षितिं कृत्वा त्राति चैतदतो वा क्षेत्रमीरितम्। एतस्मात् क्षीणमेतेन त्रातमित्यथवा पुनः। इच्छाद्यानां क्षेत्रनाम्नामपि नामान्तरं स्मृतम्। विकारा इति यस्मात् ते विशेषविकृतिस्थिताः। विशेषात् क्रियते यस्माद् विकारं कार्यमन्तिमम्। विगतं करणं चाऽत्र पुनर्नाशमृते यतः। तत्सम्बन्धाद् विकाराख्या इच्छाद्या अभिमानिनः। एतत् सर्वं सर्वदैव निर्दोषेणैव चक्षुषा। प्रेरयन्नेव जानाति यत् क्षेत्रज्ञो हरिस्ततः" इति च। "यस्याऽत्मा शरीरम्" इत्यादिश्रुतेश्चेतनस्यापि "इदं शरीरं कौन्तेय" इति शरीरत्वोक्तिर्युज्यते। "सत्त्वं जीवः क्वचित् प्रोक्तः क्वचित् सत्त्वं जनार्दनः। सत्त्वं नाम गुणः क्वापि क्वचित् साधुत्वमुच्यते" इति शब्दनिर्णये। "तयोरन्यः पिप्पलं स्वाद्वत्तीति सत्त्वम्" इति च पैङ्गिश्रुतिः। "जनी प्रदुर्भावे" इति धातोर्जीवस्यापि शरीरे व्यक्त्यपेक्षया जनिर्युज्यते ॥२७॥

जीवेषु दुःखयोगादिरूपेण विनश्यत्स्वप्यतथाभूतम्—

"दुःखयोगादिरूपेण जीवेषु विनशत्स्वपि। दुःखयोगादिरहितः सर्वजीवेष्ववस्थितः॥ गुणैः सर्वैः समो नित्यं न हीनो हीनगोऽपि सन्। इति पश्यति यो विष्णुं स एव न तमो व्रजेत्" इति पाद्मे ॥२८॥२९॥

प्रकृत्य स्वयमेव प्रारभ्य विष्णुना क्रियमाणानि। विष्णोर्नान्यः पूर्वप्रेरक इति।

"पूर्वं तु बादरायणो हेतुव्यपदेशात्" इति भगवद्वचनात्। "द्रव्यं कर्म च कालश्च" इति च। "स्वयं प्रकृत्य भगवान् करोति निखिलं जगत्। नैव कर्ता हरेः कश्चिदकर्ता तेन केशवः" इति च स्कान्दे।

तेनेति प्रस्तुतत्वादेव सिद्धम्। "अहं सर्वस्य प्रभवः", "स हि कर्ता", "कर्तारमीशं पुरुषं ब्रह्मयोनिम्", "जन्माद्यस्य यतः", "मत्त एवेति तान् विद्धि" इत्यादिसकलप्रमाणविरोधश्चान्यथा। "प्रकृत्यैव च" इति चशब्दात्तेनैवेति सिद्ध्यति।

यदा भूतपृथग्भावमेकस्थमनुपश्यति ।
तत एव च विस्तारं ब्रह्म सम्पद्यते तदा ॥ ३१

एकस्थम्, एकस्मिन्नेव विष्णौ स्थितम्। तत एव च विष्णोर्विस्तारम् ॥३१॥

अनादित्वान्निर्गुणत्वात् परमात्माऽयमव्ययः ।
शरीरस्थोऽपि कौन्तेय न करोति न लिप्यते ॥ ३२

नच व्ययादिस्तस्येत्याह—अनादित्वादिति। सादि हि प्रायो व्ययि गुणात्मकं च। "न करोति" इत्यादेरर्थ उक्तः पुरस्तात्। न लौकिकः क्रियादिस्तस्य। अतो "न प्रज्ञम्" इत्यादिवदिति॥३२-३४॥

यथा सर्वगतं सौक्ष्म्यादाकाशं नोपलिप्यते ।
सर्वत्रावस्थितो देहे तथाऽऽत्मा नोपलिप्यते ॥ ३३

यथा प्रकाशयत्येकः कृत्स्नं लोकमिमं रविः ।
क्षेत्रं क्षेत्री तथा कृत्स्नं प्रकाशयति भारत॥ ३४

---

"प्रकृतेन क्रियायोगं चशब्दः क्वचिदीरयेत्। क्वचित् समुच्चयं ब्रूयात् क्वचिद् दौर्लभ्य-वाचकः" इति शब्दनिर्णये। प्रकृतेः कर्तृत्वं "रचनानुपपत्तेश्च नाऽनुमानम्" इत्यादि-भगवद्वचनेन निरस्तम्। "न ऋते त्वत् क्रियते किञ्चनाऽरे" इति च।

केवलप्रकृतेः कर्तृत्वाङ्गीकारे चशब्दो व्यर्थः। "तत एव च विस्तारम्" इति वाक्यशेष-विरोधश्च। "अहं बीजप्रदः पिता" इति वक्ष्यमाणमत्रापि "क्षेत्रक्षेत्रज्ञसंयोगात्" इति प्रकृतमिति तेनापि विरोधः। अचेतनं करोतीति स्वोक्तिविरोधश्च। "इच्छापूर्वं क्रियादानं कर्तृत्वं मुख्यमी-रितम्" इति पैङ्गिश्रुतिः। विकारलक्षणं कर्तृत्वं तु प्रकृतेरङ्गीकृतमेव। तथाऽपि लक्ष्मी-परमेश्वरमुक्तचेष्टासु तदभावात् "सर्वशः" इत्यस्य सङ्कोचप्राप्तिः।

"अचेतनाश्रितं कर्म विकारात्मकमीरितम्। यत्तु केवलचित्संस्थं प्रत्यभिज्ञाप्रमाणतः। अविकारात्मकं ज्ञेयं तन्न तत् प्राकृतं भवेत्" इति च ॥३०॥ "एकविष्ण्वाश्रितानां तु जीवानां भेदमेव यः। ततः परस्परं चैव तारतम्येन पश्यति। विष्णोरेव च विस्तारं जगतः स विमुच्यते" इति च ॥३१॥

शरीरस्थो जीवः —

"स्वप्नेन शारीरमभिप्रहत्यासुप्तः सुप्तानभिचाकशीति" इति श्रुतेः। "शरीरस्थस्तु संसारी शरीराभिमतेर्मतः। विष्णुः शरीरगोऽप्येष न शरीरस्थ उच्यते। शरीरा-भिमतिर्यस्मान्नैवास्यास्ति कदाचन। तद्गतानां तु दुःखानां भोगोऽभिमतिरुच्यते। तदभावान्नाभिमानी भगवान् पुरुषोत्तमः" इति च।

अनादित्वान्निर्गुणत्वात् परमात्मा जीवोऽपि न। किमुत जडं न भवतीति? शरीरोत्पत्तिलक्षण-मप्यादिमत्त्वं परस्य नास्तीति विशेषः। जीवस्य हि तदस्तीति। सत्त्वादिगुणसम्बन्धश्च। सर्वे

क्षेत्रक्षेत्रज्ञयोरेवमन्तरं ज्ञानचक्षुषा ।
भूतप्रकृतिमोक्षं च ये विदुर्यान्ति ते परम् ॥ ३५

इति श्रीभगवद्गीतायां त्रयोदशोऽध्यायः

---

**भूतेभ्यः प्रकृतेश्च मोक्षसाधनम्; अमानित्वादिकम् ॥३५॥**

इति श्रीमदानन्दतीर्थभगवत्पादविरचिते
श्रीभगवद्गीताभाष्ये
त्रयोदशोऽध्यायः

---

## चतुर्दशोऽध्यायः

**साधनं प्राधान्येनोत्तरैरध्यायैर्वक्ति—**

भगवानुवाच

परं भूयः प्रवक्ष्यामि ज्ञानानां ज्ञानमुत्तमम् ।
यज्ज्ञात्वा मुनयः सर्वे परां सिद्धिमितो गताः ॥ १

इदं ज्ञानमपाश्रित्य मम साधर्म्यमागताः ।
सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च ॥ २

मम योनिर्महद् ब्रह्म तस्मिन् गर्भं दधाम्यहम् ।
सम्भवः सर्वभूतानां ततो भवति भारत ॥ ३

महद् ब्रह्म प्रकृतिः। सा च श्रीर्भूर्दुर्गेति भिन्ना। उमासरस्वत्याद्यास्तु तदंशयुतान्यजीवाः। तथाच काषायणश्रुतिः—

"श्रीर्भूर्दुर्गा भगवती तु माया सा लोकसूतिर्जगतो बन्धिका च। उमावागाद्या अन्यजीवास्तदंशास्तदात्मना सर्ववेदेषु गीताः" इति।

मम योनिरिति गर्भाधानार्था योनिः। नतु माता। वाक्यशेषात्। तथाहि सामवेदे शार्कराक्ष्यश्रुतौ–

---

करोति परमात्मा। तथाऽपि न लिप्यते। वादिप्रसिद्धत्वादेव "इष्टापूर्तं मन्यमाना वरिष्ठम्" इत्यादिवन्निषेधः।

"कुर्वाणोऽपि यतः सर्वं पुण्यपापैर्न लिप्यते। जन्ममृत्यादिरहितः सत्त्वादिगुणवर्जितः। विष्णुस्तद्विपरीतस्तु जीवोऽतस्तौ पृथक् सदा" इति च। "स एष नेति नेति" इत्यादि च।

॥३२–३४॥ जीवानामचेतनप्रकृतेर्मोक्षं भूतप्रकृतिमोक्षम् ॥३५॥

इति श्रीमदानन्दतीर्थभगवत्पादविरचिते
श्रीभगवद्गीतातात्पर्यनिर्णये
त्रयोदशोऽध्यायः

---

"विष्णोर्योनिर्गर्भसन्धारणार्था महामाया सर्वदुःखैर्विहीना। तथाऽप्यात्मानं दुःखिवन्मोहनार्थं प्रकाशयन्ती सह विष्णुना सा" इति।

अतः सीतादुःखादिकं सर्वं मृषाप्रदर्शनमेव। तथा कूर्मपुराणे। नचेयं भूः। तथाच सौकरायणश्रुतिः—

"अन्या भूमिर्भूरियं तस्य छाया भूतावमा सा हि भूतैकयोनिः" इति। "अवाप स्वेच्छया दास्यं जगतां प्रपितामही" इत्याद्यानभिम्लातश्रुतिः। मत्स्यपुराणोक्तमपि स्वेच्छयैव। महद्ब्रह्मशब्दवाच्या प्रकृतिरेव– "महती ब्रह्मणी द्वे तु प्रकृतिश्च महेश्वरः" इति तत्रैव ॥१-४॥

सर्वयोनिषु कौन्तेय मूर्तयः सम्भवन्ति याः।
तासां ब्रह्म महद् योनिरहं बीजप्रदः पिता ॥ ४

सत्त्वं रजस्तम इति गुणाः प्रकृतिसम्भवाः।
निबध्नन्ति महाबाहो देहे देहिनमव्ययम् ॥ ५

बन्धप्रकारं दर्शयति साधनानुष्ठानाय—सत्त्वमित्यादिना ॥५॥६॥

तत्र सत्त्वं निर्मलत्वात् प्रकाशकमनामयम्।
सुखसङ्गेन बध्नाति ज्ञानसङ्गेन चानघ ॥ ६

रजो रागात्मकं विद्धि तृष्णासङ्गसमुद्भवम्।
तन्निबध्नाति कौन्तेय कर्मसङ्गेन देहिनम् ॥ ७

तृष्णासङ्गयोः समुद्भवम्। तयोः कारणम् ॥७॥

तमस्त्वज्ञानजं विद्धि मोहनं सर्वदेहिनाम्।
प्रमादालस्यनिद्राभिस्तन्निबध्नाति भारत ॥ ८

अज्ञानं जायते यतस्तदज्ञानजम्। "प्रमादमोहौ तमसः" इति वाक्यशेषात् ॥८-१५॥

सत्त्वं सुखे सञ्जयति रजः कर्मणि भारत।
ज्ञानमावृत्य तु तमः प्रमादे सञ्जयत्युत ॥ ९

रजस्तमश्चाभिभूय सत्त्वं भवति भारत।
रजः सत्त्वं तमश्चैव तमः सत्त्वं रजस्तथा ॥ १०

सर्वद्वारेषु देहेऽस्मिन् प्रकाश उपजायते।
ज्ञानं यदा तदा विद्याद् विवृद्धं सत्त्वमित्युत ॥ ११

---

क्षेत्रक्षेत्रज्ञसंयोगस्पष्टीकरणपूर्वकं त्रैगुण्यं विविच्य दर्शयति ॥१॥२॥

"योनिर्भार्या तथा स्थानं योनिः कारणमेव च" इति शब्दनिर्णये। अत्र योनिर्भार्या– "तस्मिन् गर्भं दधाम्यहम्" इति वाक्यशेषात् ॥३-१५॥

लोभः प्रवृत्तिरारम्भः कर्मणामशमः स्पृहा ।
रजस्येतानि जायन्ते विवृद्धे भरतर्षभ ॥ १२

अप्रकाशोऽप्रवृत्तिश्च प्रमादो मोह एवच ।
तमस्येतानि जायन्ते विवृद्धे कुरुनन्दन ॥ १३

यदा सत्त्वे प्रवृद्धे तु प्रलयं याति देहभृत् ।
तदोत्तमविदां लोकानमलान् प्रतिपद्यते ॥ १४

रजसि प्रलयं गत्वा कर्मसङ्गिषु जायते ।
तथा प्रलीनस्तमसि मूढयोनिषु जायते ॥ १५

कर्मणः सुकृतस्याऽहुः सात्त्विकं निर्मलं फलम् ।
रजसस्तु फलं दुःखमज्ञानं तमसः फलम् ॥ १६

रजसस्तु फलं दुःखमित्यल्पसुखं दुःखम् । तथाहि शार्कराक्ष्यशाखायाम्—"रजसो ह्येव जायते मात्रया सुखं दुःखं तस्मात् तान् सुखिनो दुःखिन इत्याचक्षते" इति । अन्यथा दुःखस्यातिकष्टत्वात् तमोऽधिकत्वं रजसो न स्यात् ॥१६–१८॥

सत्त्वात् सञ्जायते ज्ञानं रजसो लोभ एवच ।
प्रमादमोहौ तमसो भवतोऽज्ञानमेवच ॥ १७

ऊर्ध्वं गच्छन्ति सत्त्वस्था मध्ये तिष्ठन्ति राजसाः ।
जघन्यगुणवृत्तिस्था अधो गच्छन्ति तामसाः ॥ १८

ना[ऽ]न्यं गुणेभ्यः कर्तारं यदा द्रष्टाऽनुपश्यति ।
गुणेभ्यश्च परं वेत्ति मद्भावं सोऽधिगच्छति ॥ १९

---

एतेभ्यः सत्त्वादिगुणेभ्योऽन्यं कर्तारमीशं यदा पश्यति तदैवायं ना पुरुषः । अन्यथा पशुसमः । न केवलमन्यत्वेन पश्यन् ना तं कर्तारं विष्णुम् । किन्तु गुणेभ्य उत्तमत्वेन च । कथं स एव ना? यस्मात् "मद्भावं सोऽधिगच्छति" ।

"महालक्ष्मीरिति परा भार्या नारायणस्य या । प्रकृतिर्नाम सा ज्ञेया प्रकर्षेण करोति यत् । तस्यास्तु त्रीणि रूपाणि सत्त्वं नाम रजस्तमः । सृष्टिकाले विभज्यन्ते सत्त्वं श्रीः सद्गुणप्रभा । रजो रञ्जनकर्तृत्वाद् भूः सा सृष्टिकरी यतः । यदावेशादियं पृथ्वी भूमिरित्येव कथ्यते । जीवानां ग्लपनाद् दुर्गा तम इत्येव कीर्तिता । एताभिस्तिसृभिर्जीवाः सर्वे बद्धा अमुक्तिगाः । सर्वान् बध्नन्ति सर्वाश्च तथाऽपि तु विशेषतः । श्रीर्देवबन्धिका नॄणां भूर्दैत्यानामथापरा । एताभ्योऽन्यं परं चैव विष्णुं ज्ञात्वा विमुच्यते ।

परिणामिकर्तारं गुणेभ्योऽन्यं न पश्यति । अन्यथा "यदा पश्यः पश्यते रुग्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम्" इति श्रुतिविरोधः ।'नाहं कर्ता न कर्ता त्वं कर्ता यस्तु सदा प्रभुः' इति मोक्षधर्मे॥१९–२१॥

गुणानेतानतीत्य त्रीन् देही देहसमुद्भवान् ।
जन्ममृत्युजरादुःखैर्विमुक्तोऽमृतमश्नुते ॥ २०

अर्जुन उवाच

कैर्लिङ्गैस्त्रीन् गुणानेतानतीतो भवति प्रभो ।
किमाचारः कथं चैतांस्त्रीन् गुणानतिवर्तते ॥ २१

भगवानुवाच

प्रकाशं च प्रवृत्तिं च मोहमेव च पाण्डव ।
न द्वेष्टि सम्प्रवृत्तानि न निवृत्तानि काङ्क्षति ॥ २२

प्रायो न द्वेष्टि न काङ्क्षति । तथाहि सामवेदे भाल्लवेयशाखायाम्—

"रजस्तमःसत्त्वगुणान् प्रवृत्तान् प्रायो नच द्वेष्टि नचापि काङ्क्षते । तथाऽपि सूक्ष्मं सत्त्वगुणं च काङ्क्षेद् यदि प्रविष्टं सुतमश्च जह्यात्" इति । "नहि देवा ऋषयश्च सत्त्वस्था नृपसत्तम । हीनाः सूक्ष्मेण सत्त्वेन ततो वैकारिकाः स्मृताः । कथं वैकारिको गच्छेत् पुरुषः पुरुषोत्तमम्" इति मोक्षधर्मे । "सात्त्विकः पुरुषव्याघ्र भवेन्मोक्षार्थनिश्चितः" इति च ॥२२॥२३॥

उदासीनवदासीनो गुणैर्यो न विचाल्यते ।
गुणा वर्तन्त इत्येव योऽवतिष्ठति नेङ्गते ॥ २३

समदुःखसुखः स्वस्थः समलोष्टाश्मकाञ्चनः ।
तुल्यप्रियाप्रियो धीरस्तुल्यनिन्दात्मसंस्तुतिः ॥ २४

---

सामर्थ्यातिशयादासां नैताभ्यो विद्यते परः । इति यावद् विजानाति तावत् तं नृपशुं विदुः । तस्मादाभ्योऽधिकगुणो विष्णुर्ज्ञेयः सदैवच" इति महाविष्णुपुराणे । "रजसस्तु फलं दुःखम्" इत्यत्र दुःखमिति दुःखमिश्रं सुखम्— "दुःखं दुरिति सम्प्रोक्तं खं नाम सुखमुच्यते" इति शब्दनिर्णये । "कर्मणो राजसस्योक्तं दुःखमिश्रं सुखं फलम् । अज्ञानजं तामसस्य नित्यदुःखं फलं विदुः" इति स्कान्दे ॥१६-२१॥ "लोकस्थितान् प्रकाशादीन् प्रायो न द्वेष्टि नेच्छति । स्वयम्प्रकाशी मोहोज्झस्तथाऽपि पुनरिच्छति । विष्णौ प्रकाशं तं चापि नित्यभक्त्याऽभिसेवते । सुखदुःखादिभावेऽपि विष्णुभक्तौ समः सदा । अर्थार्थं वा प्रियार्थं वा निन्दादीनां भयादपि । न विष्णुभक्तिह्रासोऽस्य किन्तु साम्यमथोन्नतिः । अवैष्णवारम्भवर्जी विष्णुं याति न संशयः" इति च ॥२२॥

उदासीनवदित्युक्तेश्च न केवलोदासीनत्वम् । "नेङ्गते" इत्युदासीनवृत्तिनिषेधः । "सर्वारम्भपरित्यागी" इति विशेषप्रयोजनापेक्षयाऽपि नावैष्णवारम्भ इति ।

मानापमानयोस्तुल्यस्तुल्यो मित्रारिपक्षयोः ।
सर्वारम्भपरित्यागी गुणातीतः स उच्यते ॥ २५

तुल्यत्वार्थ उक्तः पुरस्तात् ॥२४॥२५॥

मां च योऽव्यभिचारेण भक्तियोगेन सेवते ।
स गुणान् समतीत्यैतान् ब्रह्मभूयाय कल्पते ॥ २६

ब्रह्मवत् प्रकृतिवत् भगवत्प्रियत्वं ब्रह्मभूयम् । न तु तावत्प्रियत्वम् । किन्तु प्रियत्वमात्रम् । "बद्धो वाऽपि तु मुक्तो वा न रमावत् प्रियो हरेः" इति पाद्मे । भूयाय भावाय ॥२६॥

ब्रह्मणो हि प्रतिष्ठाऽहममृतस्याव्ययस्य च ।
शाश्वतस्य च धर्मस्य सुखस्यैकान्तिकस्य च ॥ २७

इति श्रीभगवद्गीतायां चतुर्दशोऽध्याय:

---

ब्रह्मणो मायायाः ॥२७॥

इति श्रीमदानन्दतीर्थभगवत्पादविरचिते
श्रीभगवद्गीताभाष्ये
चतुर्दशोऽध्यायः

---

"इङ्गनं क्षणिकं कर्म दीर्घमारम्भ उच्यते" इति शब्दनिर्णये ॥२३-२५॥ "लक्ष्म्यादिभिः कृतो बन्धो योऽनादिः पुरुषस्य तु । तमत्येतीह यो विद्वान् स विज्ञेयो गुणात्ययी" इति च प्रवृत्ते ।

तत्कृतबन्धात्ययात् तदधिकविष्णुप्राप्तेश्च तदत्ययीत्युच्यते । यथा द्वारपालमतीत्य राजानं गच्छतीति । ब्रह्मणि भूयं ब्रह्मभूयम् । ब्रह्मेति प्रकृता महालक्ष्मीः —

"अतीत्य त्रीणि रूपाणि महालक्ष्मीं प्रपद्यते । तया त्वनुगृहीतोऽसौ वैष्णवो विष्णुगो भवेत्" इति च ॥२६॥

ब्रह्म प्राप्तो मत्प्राप्त एव भवतीत्याह— ब्रह्मणो हीति । मदवियोगात् तस्या अपि मत्स्थ एव भवतीत्यर्थः । तथा प्राप्तिक्रमविवक्षया तदुक्तिः । एकान्तिकस्य सुखस्य मोक्षस्य ॥ २७ ॥

इति श्रीमदानन्दतीर्थभगवत्पादविरचिते
श्रीभगवद्गीतातात्पर्यनिर्णये
चतुर्दशोऽध्यायः

---

## पञ्चदशोऽध्यायः

संसारस्वरूपतदत्ययोपायविज्ञानान्यस्मिन्नध्याये दर्शयति—

भगवानुवाच

ऊर्ध्वमूलमधःशाखमश्वत्थं प्राहुरव्ययम् ।
छन्दांसि यस्य पर्णानि यस्तं वेद स वेदवित् ॥ १

ऊर्ध्वो विष्णुः । "ऊर्ध्वपवित्रो वाजिनीवस्वमृतमस्मि द्रविणꣳसवर्चसम्" इति हि श्रुतिः । ऊर्ध्वः उत्तमः सर्वतः । अधो निकृष्टम् । शाखा भूतानि । श्वोऽप्येकप्रकारेण न तिष्ठतीत्यश्वत्थः । तथाऽपि न प्रवाहव्ययः । पूर्वब्रह्मकाले यथा स्थितिस्तथा सर्वत्रापीत्यव्ययता । फलकारणत्वाच्छन्दसां पर्णत्वम् । नहि कदाचिदप्यजाते पर्णे फलोत्पत्तिः ॥१॥

अधश्चोर्ध्वं च प्रसृतास्तस्य शाखा
गुणप्रवृद्धा विषयप्रवालाः ।
अधश्च मूलान्यनुसन्ततानि
कर्मानुबन्धीनि मनुष्यलोके ॥ २

अव्यक्तेऽपि सूक्ष्मरूपेण सन्ति शरीरादौ च भूतानीत्यधश्चोर्ध्वं च प्रसृताः । गुणैः सत्त्वादिभिः । प्रतीतिमात्रसुखत्वात् प्रवाला विषयाः । मूलानि भगवद्रूपादीनि । भगवानपि कर्मानुबन्धेन हि फलं ददाति । तथाच भाल्लवेयशाखायाम्—

"ब्रह्म वा अस्य पृथङ् मूलं प्रकृतिः समूलं सत्त्वाद्योऽर्वाचीनमूलं भूतानि शाखाश्छन्दांसि पत्राणि देवनृतिर्यञ्चश्च शाखाः पत्रेभ्यो हि फलं जायते मात्राः शिफा मुक्तिः फलममुक्तिः फलं मोक्षो रसोऽमोक्षो रसोऽव्यक्ते च शाखा व्यक्ते च शाखा अव्यक्ते च मूलं व्यक्ते च मूलमेषोऽश्वत्थो गुणालोलपत्रो न स्थीयते न न स्थीयते नह्येष कदाचनान्यथा जायते नान्यथा जायते" इति ॥२॥

न रूपमस्येह तथोपलभ्यते
नान्तो नचाऽदिर्नच सम्प्रतिष्ठा ।

---

त्रयोदशोक्तं विविच्य दर्शयति—

"पृथङ् मूलं हरिस्तस्य जगद्वृक्षस्य भूमिवत् । सत्त्वादियुक्ते चिदचित्प्रकृती मूलभागवत् । अत्रापि चिदचिद्योगो वृक्षवत् सम्प्रकीर्तितः । पृथिवीदेवतावत् तद्धरिर्मृद्वदचेतना । उत्तमत्वात्तु मूलानामूर्ध्वमूलस्त्वयं स्मृतः । नीचास्ततो महदहम्बुद्ध्यो भूतसंयुताः । शाखाश्छन्दांसि पर्णानि काममोक्षफले ह्यतः ॥१॥ कारणेषु स्थितं कार्यं व्याप्तं कार्येषु कारणम् । अन्योन्यसंयुताः शाखा मूलानि तु सदैव तु । विषया दर्शनीयत्वात् प्रवालसदृशा मताः ॥ २ ॥ जगद्वृक्षोऽयमश्वत्थो ह्यश्ववच्चञ्चलात्मकः ।

अश्वत्थमेनं सुविरूढमूल-

मसङ्गशस्त्रेण दृढेन छित्त्वा ॥ ३

ततः परं तत् परिमार्गितव्यं

यस्मिन् गता न निवर्तन्ति भूयः ।

तमेव चाऽद्यं पुरुषं प्रपद्ये

यतः प्रवृत्तिः प्रसृता पुराणी ॥ ४

यथा स्थितस्तथा नोपलभ्यते। अन्तादिर्विष्णुः । "त्वमादिरन्तो जगतोऽस्य मध्यम्" इति भागवते। "अनाद्यन्तं परं ब्रह्म न देवा ऋषयो विदुः" इति मोक्षधर्मे। असङ्गशास्त्रेण सङ्गराहित्यसहितेन ज्ञानेन। "ज्ञानासिनोपासनया शितेन" इति भागवते। छेदश्च विमर्श एव। ततश्च तस्यैवाबन्धकं भवति। तथाहि मूलस्थं ब्रह्म प्रतीयते। तच्चोक्तं तच्छ्रुतावेव—

"विमर्शो ह्यस्य च्छेदस्तं न बध्नाति बध्नाति चान्यान्" इति। तदर्थं च तमेव प्रपद्ये प्रपद्येत। तच्चोक्तं तत्रैव—"तं वै प्रपद्येत यं वै प्रपद्य न शोचति न हृष्यति न जायते न म्रियते तद् ब्रह्ममूलं तच्चिच्छित्सुः" इति। "नारायणेन दृष्टश्च प्रतिबुद्धो भवेत् पुमान्" इति मोक्षधर्मे।

छेदनोपायो ह्यत्राऽकाङ्क्षितः। न च भगवतोऽन्यः शरण्योऽस्ति ॥३॥४॥

निर्मानमोहा जितसङ्गदोषा

अध्यात्मनित्या विनिवृत्तकामाः ।

द्वन्द्वैर्विमुक्ताः सुखदुःखसंज्ञै-

र्गच्छन्त्यमूढाः पदमव्ययं तत् ॥ ५

साधनान्तरमाह—निर्मानेति ॥५॥

न तद् भासयते सूर्यो न शशाङ्को न पावकः ।

यद् गत्वा न निवर्तन्ते तद् धाम परमं मम ॥ ६

ममैवांशो जीवलोके जीवभूतः सनातनः ।

मनःषष्ठानीन्द्रियाणि प्रकृतिस्थानि कर्षति ॥ ७

स्वरूपं कथयति – न तदित्यादिना ॥६॥७॥

---

अव्ययोऽयं प्रवाहेण स्वसक्तज्ञानहेतिना। विष्णोः सम्यक् पृथग्दृष्टिनामच्छेदनभाक् सदा। अव्यक्तादिसमस्तं तु नेति नेत्यादिवाक्यतः। बोधेनैव पृथग् विष्णोः कृत्वा मृग्यः स केशवः। तमेवाऽद्यं प्रपद्येत यदंशाभासको ह्ययम्। जीवराशिः समस्तोऽपि ब्रह्मरुद्रेन्द्रपूर्वकः। किञ्चित्साद‍ृश्यमात्रेण भिन्नोऽप्यंश इवोच्यते। ईश्वरस्तु यदा त्वस्य शरीरं विशति प्रभुः। मनःषष्ठानीन्द्रियाणि प्रकृतिस्थानि कर्षति ॥ ३-७॥

शरीरं यदवाप्नोति यच्चाप्युत्क्रामतीश्वरः ।
गृहीत्वैतानि संयाति वायुर्गन्धानिवाऽशयात् ॥ ८

कर्षतीत्युक्ते जीवस्य स्वातन्त्र्यं प्रतीतम् । तन्निवारयति–शरीरमित्यादिना । यत् यदा शरीरमाप्नोति उत्क्रामति च जीवः, तदेश्वर एतानि गृहीत्वा संयाति ।

"यत्र यत्रैव संयुक्तो धाता गर्भं पुनःपुनः । तत्र तत्रैव वसति न यत्र स्वयमिच्छति" इति हि मोक्षधर्मे । "भावाभावावविजानन् गरीयो जानामि श्रेयो नतु तत् करोमि । आशासु हर्म्यासु हृदासु कुर्वन् यथा नियुक्तोऽस्मि तथा वहामि" इति च । "हत्वा जित्वापि मघवन् यः कश्चित् पुरुषायते । अकर्ता त्वेव भवति कर्ता त्वेव करोति तत्" इति च । "तद्यथाऽनः सुसमाहितमुत्सर्जद् यायादेवमेवायं शारीर आत्मा प्राज्ञेनाऽत्मनाऽन्वारूढ उत्सर्जद् याति" इति च श्रुतिः । "वाङ् मनसि सम्पद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायाम्" इति च ।

गन्धानिव सूक्ष्माणि ॥८॥

श्रोत्रं चक्षुः स्पर्शनं च रसनं घ्राणमेवच ।
अधिष्ठाय मनश्चायं विषयानुपसेवते ॥ ९

भोगोऽस्यापि साधितः पुरस्तात् । इन्द्रियद्वारा हि सोऽपि भुङ्क्ते । "तद् य इमे वीणायां गायन्त्येतं ते गायन्ति" इति च श्रुतिः ॥९॥

उत्क्रामन्तं स्थितं वाऽपि भुञ्जानं वा गुणान्वितम् ।
विमूढा नानुपश्यन्ति पश्यन्ति ज्ञानचक्षुषः ॥ १०

गुणान्वितमेव भुङ्क्ते । "न हवै देवान् पापं गच्छति" इति श्रुतिः । तर्हि किमिति न दृश्यत इत्यत आह—उत्क्रामन्तमित्यादिना ॥१०॥

यतन्तो योगिनश्चैनं पश्यन्त्यात्मन्यवस्थितम् ।
यतन्तोऽप्यकृतात्मानो नैनं पश्यन्त्यचेतसः ॥ ११

यतन्तो ज्ञानं प्राप्य । अकृतात्मानः अशुद्धबुद्धयः ॥११॥

यदादित्यगतं तेजो जगद् भासयतेऽखिलम् ।
यच्चन्द्रमसि यच्चाग्नौ तत् तेजो विद्धि मामकम् ॥ १२

पूर्वोक्तमेव ज्ञानं प्रपञ्चयति—यदादित्यगतमित्यादिना ॥१२॥

---

शब्दादीन् प्रत्यथ यदा जीवमादाय यात्यतः । गृहीत्वैतानि संयाति वायुर्गन्धानिवाऽशयात् ॥८॥ भुङ्क्ते हरिः शुभान् भोगानिन्द्रियेषु व्यवस्थितः । पूर्णानन्दोऽपि भगवान्

गामाविश्य च भूतानि धारयाम्यहमोजसा ।
पुष्णामि चौषधीः सर्वाः सोमो भूत्वा रसात्मकः ॥ १३

गां भूमिम् ॥१३॥१४॥

अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः ।
प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम् ॥ १४

सर्वस्य चाहं हृदि सन्निविष्टो
मत्तः स्मृतिर्ज्ञानमपोहनं च ।
वेदैश्च सर्वैरहमेव वेद्यो
वेदान्तकृद् वेदविदेव चाहम् ॥ १५

वेदनिर्णयात्मिका मीमांसा वेदान्तः । तथाच सामवेदे प्राचीनशालश्रुतिः—"स वेदान्तकृत् स कालक इति । स ह्येव युक्तिसूत्रकृत् स कालकः" इति ॥१५॥

द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एवच ।
क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥ १६

क्षरभूतानि ब्रह्मादीनि । कूटस्थः प्रकृतिः । तथाच शार्कराक्ष्यश्रुतिः—

"प्रजापतिप्रमुखाः सर्वेजीवाः क्षरोऽक्षरः पुरुषो वै प्रधानम् । तदुत्तमं चान्यमुदाहरन्ति जालाजालं मातरिश्वानमेकम्" इति ॥१६-२०॥

इति श्रीमदानन्दतीर्थभगवत्पादविरचिते
श्रीभगवद्गीताभाष्ये
पञ्चदशोऽध्यायः

---

उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।
यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ॥ १७

यस्मात् क्षरमतीतोऽहमक्षरादपिचोत्तमः ।
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥ १८

---

क्रीडया भुङ्क्त एवतु ॥९-१२॥ सौम्यत्वात् सोमनामाऽसौ सोममण्डलगः सदा ॥१३॥ स एवाग्निस्थितो विष्णुर्नाम्ना वैश्वानरः सदा । सर्वेषां स नराणां यदुपजीव्यः सदैवच ॥ १४ ॥ स एव व्यासरूपेण वेदान्तकृदुदाहृतः ॥ १५ ॥ ब्रह्मरुद्रादयः सर्वे शरीरक्षरणात् क्षराः । श्रीरक्षरात्मेत्युदिता नित्यचिद्देहका यतः । चेतनाचेतनस्यास्य राशेः संस्थापकत्वतः । कूटस्थ आत्मा सा ज्ञेया परमात्मा हरिः स्वयम् ॥ १६ ॥

यो मामेवमसम्मूढो जानाति पुरुषोत्तमम् ।
स सर्ववित् भजति मां सर्वभावेन भारत ॥ १९
इति गुह्यतमं शास्त्रमिदमुक्तं मयाऽनघ ।
एतद् बुद्ध्वा बुद्धिमान् स्यात् कृतकृत्यश्च भारत ॥ २०

इति श्रीभगवद्गीतायां पञ्चदशोऽध्यायः

---

## षोडशोऽध्यायः

पुमर्थसाधनविरोधीन्यनेनाध्यायेन दर्शयति—

भगवानुवाच

अभयं सत्त्वसंशुद्धिर्ज्ञानयोगव्यवस्थितिः ।
दानं दमश्च यज्ञश्च स्वाध्यायस्तप आर्जवम् ॥ १

तपो ब्रह्मचर्यादि । "ब्रह्मचर्यादिकं तपः" इत्यभिधानम् ॥१॥

अहिंसा सत्यमक्रोधस्त्यागः शान्तिरपैशुनम् ।
दया भूतेष्वलोलुत्वं मार्दवं ह्रीरचापलम् ॥ २

पैशुनं परोपद्रवनिमित्तानां राजादेः कथनम्—

"परोपद्रवहेतूनां दोषाणां पैशुनं वचः । राजादेस्तु मदाद् भीतेरद्दष्टिर्दर्प उच्यते" इत्यभिधानम् । लौल्यं रागः— " रागो लौल्यं तथा रक्तिः " इत्यभिधानात् । अचापलं स्थैर्यम्—"चपलश्चञ्चलोऽस्थिरः" इत्यभिधानात् ॥२॥

तेजः क्षमा धृतिः शौचमद्रोहो नातिमानिता ।
भवन्ति सम्पदं दैवीमभिजातस्य पार्थिव ॥ ३

क्षमा तु क्रोधाभावेन सहापकर्तुरनपकृतिः । "अक्रोधोऽदोषकृच्छत्रोः क्षमावान् स निगद्यते" इत्यभिधानात् ॥३॥४॥

दम्भो दर्पोऽभिमानश्च क्रोधः पारुष्यमेवच ।
अज्ञानं चाभिजातस्य पार्थ सम्पदमासुरीम् ॥ ४

---

॥ १७ ॥ क्षराक्षरात्मनोर्यस्मादुत्तमः स सदाऽनयोः । पुरुषोत्तमनामाऽतः प्रसिद्धो लोकवेदयोः" इति नारायणश्रुतिः ॥ १८-२० ॥

इति श्रीमदानन्दतीर्थभगवत्पादविरचिते
श्रीभगवद्गीतातात्पर्यनिर्णये
पञ्चदशोऽध्यायः

दैवी सम्पद् विमोक्षाय निबन्धायाऽसुरी मता ।
मा शुचः सम्पदं दैवीमभिजातोऽसि पाण्डव ॥ ५

दैवीं सम्पदमभिजातः प्रतिजातः ॥५-७॥

द्वौ भूतसर्गौ लोकेऽस्मिन् दैव आसुर एवच ।
दैवो विस्तरशः प्रोक्त आसुरं पार्थ मे शृणु ॥ ६

प्रवृत्तिं च निवृत्तिं च जना न विदुरासुराः ।
न शौचं नापिचाऽचारो न सत्यं तेषु विद्यते ॥ ७

असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम् ।
अपरस्परसम्भूतं किमन्यत् कामहैतुकम् ॥ ८

जगतः सत्यं प्रतिष्ठा ईश्वरश्च विष्णुः । तद्वैपरीत्येनाऽहुः ।

"तस्योपनिषत् सत्यस्य सत्यमिति । प्राणा वै सत्यं तेषामेष सत्यम्"इति हि श्रुतिः । "द्वे वाव ब्रह्मणो रूपे मूर्तं चामूर्तं च स्थितं च सच्च यच्च त्यच्च" इति च । "तस्योपनिषत् सत्यस्य सत्यमिति । एष ह्येवैतत् सादयति यामयति चेति" इति प्राचीनशालश्रुतिः । परस्परसम्भवो ह्युक्तः—"अन्नाद् भवन्ति" इत्यादिना ॥८॥९॥

एतां दृष्टिमवष्टभ्य नष्टात्मानोऽल्पबुद्धयः ।
प्रभवन्त्युग्रकर्माणः क्षयाय जगतोऽहिताः ॥ ९

काममाश्रित्य दुष्पूरं दम्भमानमदान्विताः ।
मोहाद् गृहीत्वाऽसद्ग्राहान् प्रवर्तन्तेऽशुचिव्रताः ॥ १०

दुष्पूरो हि कामः । "पाताल इव दुष्पूरो मां हि क्लेशयसे सदा" इति हि मोक्षधर्मे ॥१०-१७॥

चिन्तामपरिमेयां च प्रलयान्तामुपाश्रिताः ।
कामोपभोगपरमा एतावदिति निश्चिताः ॥ ११

आशापाशशतैर्बद्धाः कामक्रोधपरायणाः ।
ईहन्ते कामभोगार्थमन्यायेनार्थसञ्चयान् ॥ १२

इदमद्य मया लब्धमिमं प्राप्स्ये मनोरथम् ।
इदमस्तीदमपि मे भविष्यति पुनर्धनम् ॥ १३

असौ मया हतः शत्रुर्हनिष्ये चापरानपि ।
ईश्वरोऽहमहं भोगी सिद्धोऽहं बलवान् सुखी ॥ १४

आढ्योऽभिजनवानस्मि कोऽन्योऽस्ति सदृशो मया ।
यक्ष्ये दास्यामि मोदिष्य इत्यज्ञानविमोहिताः ॥ १५

अनेकचित्तविभ्रान्ता मोहजालसमावृताः ।
प्रसक्ताः कामभोगेषु पतन्ति नरकेऽशुचौ ॥ १६

आत्मसम्भाविताः स्तब्धा धनमानमदान्विताः ।
यजन्ते नामयज्ञैस्ते दम्भेनाविधिपूर्वकम् ॥ १७

अहङ्कारं बलं दर्पं कामं क्रोधं च संश्रिताः ।
मामात्मपरदेहेषु प्रद्विषन्तोऽभ्यसूयकाः ॥ १८

मामात्मपरदेहेष्विति । न कस्यचिद् विष्णुः कारयिता, यदि स्यान्ममापीदानीं कारयत्वित्यादि ।
"ईश्वरो यदि सर्वस्य कारकः कारयीत माम् । अद्येति वादिनं ब्रूयात् सदाऽधो यास्यसीति हा " इति सामवेदे यास्कश्रुतिः ॥१८–२४॥

इति श्रीमदानन्दतीर्थभगवत्पादविरचिते
श्रीभगवद्गीताभाष्ये
षोडशोऽध्यायः

---

तानहं द्विषतः क्रूरान् संसारेषु नराधमान् ।
क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु ॥ १९

आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि ।
मामप्राप्यैव कौन्तेय ततो यान्त्यधमां गतिम् ॥ २०

---

देवासुरलक्षणम् ।

"येऽतिमानेन मन्यन्ते परमेशोऽहमित्यपि । मिथ्या जगदिदं सर्वं भ्रमजत्वान्न तिष्ठति। मिथ्यात्वान्नेश्वरोऽस्यास्ति परेभ्योऽपि न जायते । स्वस्मिन्नपि तथाऽन्यस्मिन् नियन्ताऽन्य इतीरिते । प्रद्विषन्त्यसुरास्तेतु सर्वे यान्त्यधरं तमः । अयोग्येशत्वकामत्वात् लोभाच्चाऽत्मसमर्पणे । तत्त्ववेदिषु कोपाच्च तमस्तेषां न दुर्लभम् । अक्षागमानुमानां च स्वोक्तेरपि विरोधिनः । यस्मात् ततोऽसुरा ज्ञेया एवमन्येऽपि तादृशाः । ये तु विष्णुं परं ज्ञात्वा यजन्ते नान्यदेवताः । प्रत्यक्षाद्यविसंवादिज्ञानादेव विमुक्तिगाः" इति ब्रह्मवैवर्ते । "निबन्धाय" नीचस्थानेऽन्धे तमसि बन्धाय । " सर्गाणां सुबहुत्वेऽपि शुभाशुभफलाधिकौ । देवासुराख्यौ द्वावेव गन्धर्वाद्यास्तदन्तराः। मुक्तिगा एव विज्ञेया देवा एव विमुक्तिगाः" इति च । "विमोक्षाय" इत्यत्र वीत्युपसर्गादेव च मोक्षनानात्वं

त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः ।
कामः क्रोधस्तथा लोभस्तस्मादेतत् त्रयं त्यजेत् ॥ २१

एतैर्विमुक्तः कौन्तेय तमोद्वारैस्त्रिभिर्नरः ।
आचरत्यात्मनः श्रेयस्ततो याति परां गतिम् ॥ २२

यः शास्त्रविधिमुत्सृज्य वर्तते कामकारतः ।
न स सिद्धिमवाप्नोति न सुखं न परां गतिम् ॥ २३

तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ ।
ज्ञात्वा शास्त्रविधानोक्तं कर्म कर्तुमिहार्हसि ॥ २४

इति श्रीभगवद्गीतायां षोडशोऽध्यायः

---

## सप्तदशोऽध्यायः

गुणभेदान् प्रपञ्चयत्यनेनाध्यायेन—

अर्जुन उवाच

ये शास्त्रविधिमुत्सृज्य यजन्ते श्रद्धयाऽन्विताः ।
तेषां निष्ठा तु का कृष्ण सत्त्वमाहो रजस्तमः ॥ १

शास्त्रविधिमुत्सृज्य अज्ञात्वैव ।

"वेदः कृत्स्नोऽधिगन्तव्यः सरहस्यो द्विजन्मना" इति विधिरुत्सृष्टो हि तैः । "ये वै वेदं न पठन्ते नचार्थं वेदोज्झितांस्तान् विद्धि सानूनबुद्धीन्" इति माधुच्छन्दसश्रुतिः । अन्यथा तामसा इत्येवोच्येत । नतु विभज्य । यदि सात्त्विकास्तर्हि नोत्सृष्टशास्त्राः । नहि वेद-विरुद्धो धर्मः ।

---

ज्ञायते ।"देवासुरनरत्वाद्या जीवानां तु निसर्गतः। निसर्गो नान्यथैतेषां केनचित् क्वचि-देव वा । देवाः शापबलादेव प्रह्लादादित्वमागताः । अतः पुनश्च देवत्वं ते यान्ति निज-मेव तु । हेतुतः सोऽन्यथाभावो रक्तता स्फटिके यथा । अतो नित्यश्च नाप्येष स्वभाव-विनिवर्तकः । किन्त्वाक्रम्यैव तं तिष्ठेद् देवसर्गस्ततो हि सः । अशोच्य एव विज्ञेयो मोक्षयोग्यो हरेः प्रियः" इति च ॥ १-२४ ॥

इति श्रीमदानन्दतीर्थभगवत्पादविरचिते
श्रीभगवद्गीतातात्पर्यनिर्णये
षोडशोऽध्यायः

---

"वेदोऽखिलो धर्ममूलम् । स्मृतिशीले च तद्विदाम्" इति हि स्मृतिः । "वेदप्रणिहितो धर्मो ह्यधर्मस्तद्विपर्ययः" इति च भागवते ॥१॥

भगवानुवाच

त्रिविधा भवति श्रद्धा देहिनां सा स्वभावजा ।
सात्त्विकी राजसी चैव तामसी चेति तां शृणु ॥ २

अतो विभज्याऽऽह—त्रिविधेत्यादिना ॥२॥

सत्त्वानुरूपा सर्वस्य श्रद्धा भवति भारत ।
श्रद्धामयोऽयं पुरुषो यो यच्छ्रद्धः स एव सः ॥ ३

सत्त्वानुरूपा चित्तानुरूपा । यो यच्छ्रद्धः स एव सः सात्त्विकश्रद्धः सात्त्विक इत्यादि ॥३॥

यजन्ते सात्त्विका देवान् यक्षरक्षांसि राजसाः ।
प्रेतान् भूतगणांश्चान्ये यजन्ते तामसा जनाः ॥ ४

कः सात्त्विकश्रद्ध इत्यादि विभज्याऽऽह—यजन्त इत्यादिना ॥४॥५॥

अशास्त्रविहितं घोरं तप्यन्ते ये तपो जनाः ।
दम्भाहङ्कारसंयुक्ताः कामरागबलान्विताः ॥ ५

कर्शयन्तः शरीरस्थं भूतग्राममचेतसः ।
मां चैवान्तःशरीरस्थं तान् विद्ध्यासुरनिश्चयान् ॥ ६

भगवत्कर्शनं नामाल्पत्वदृष्टिरेव । "यो वै महान्तं परमं पुमांसं नैवं द्रष्टा कर्शकः सोऽतिपापी" इति ह्यानभिम्लातश्रुतिः । आसुरो निश्चयो येषां त आसुरनिश्चयाः । "देवास्तु सात्त्विकाः प्रोक्ताः दैत्या राजसतामसाः" इति ह्याग्निवेश्यश्रुतिः ॥६॥७॥

---

सदसत्कर्मविवेकः ॥ १ ॥ २ ॥ सत्त्वानुरूपा जीवानुरूपा अतो ये सात्त्विकश्रद्धास्ते सात्त्विका इति ज्ञेया अन्येऽन्य इति । श्रद्धामयः श्रद्धारूपः ।

"श्रद्धा स्वरूपं जीवस्य तस्माच्छ्रद्धाविभेदतः । उत्तमाधममध्यास्तु जीवा ज्ञेयाः पृथक् पृथक् । स्वरूपभूता श्रद्धैव तमोगानां विमोक्षिणाम् । शिष्यते संसृतिस्थानां श्रद्धारूपं मनोऽपरम् । तत्र स्वरूपश्रद्धैव व्यज्यते प्रायशः क्वचित् । सात्त्विकस्य तमोरूपा श्रद्धाऽन्तःकरणात्मिका । सात्त्विकी तामसस्यापि भूयस्त्वात् तद् विविच्यते ॥३॥ श्रद्धेत्यास्तिक्यनिष्ठोक्ता सा येषां देवतोत्तमे । विष्णौ तद्भक्तबुद्ध्यैव रमाब्रह्मादिकेषु तु । ते सात्त्विका इति ज्ञेयास्तैरिष्टं विष्णुरेवतु । श्रीश्च साऽध्यक्षविद्याख्या ब्रह्मेन्द्राद्याश्च देवताः । विबुधत्वात्तु मन्वाख्या भुञ्जते प्रीतिपूर्वकम् । व्यामिश्रयाजिनो येतु विष्ण्वाधिक्ये ससंशयाः । स्वरूपमात्रे देवानां श्रद्धायुक्ताश्च सर्वदा । राजसास्ते तु विज्ञेयास्तैरिष्टं यक्षराक्षसाः । दीनत्वाद् देवनामानो ब्रह्मेन्द्रादिसनामकाः । गृह्णन्ति ये हरिं

आहारस्त्वपि सर्वस्य त्रिविधो भवति प्रियः ।
यज्ञस्तपस्तथा दानं तेषां भेदमिमं शृणु ॥ ७

आयुःसत्त्वबलारोग्यसुखप्रीतिविवर्धनाः ।
रस्याः स्निग्धाः स्थिरा हृद्या आहाराः सात्त्विकप्रियाः ॥ ८

प्रीतिरानन्तरिका । हृद्यत्वं दर्शने । स्थिराश्च न तदैव पक्का भवन्ति । तथा ह्याज्यादयः ॥८—१५॥

कट्वम्ललवणात्युष्णतीक्ष्णरूक्षविदाहिनः ।
आहारा राजसस्येष्टा दुःखशोकामयप्रदाः ॥ ९

यातयामं गतरसं पूति पर्युषितं च यत् ।
उच्छिष्टमपिचामेध्यं भोजनं तामसप्रियम् ॥ १०

---

त्वन्यदेवादिसममेव तु । नीचं ब्रह्माद्यनन्यं वा मन्यन्ते नेति चाखिलम् । तत्तच्छ्रद्धायुतास्तेतु तामसाः परिकीर्तिताः । भूतप्रेतास्तु तैरिष्टं शिवस्कन्दादिनामकाः । साक्षाच्छिवपरीवारा भुञ्जते ह्यतितामसाः । मोक्षः साङ्कल्पिकः स्वर्गो भूतादित्वं फलं क्रमात् । त्यक्त्वाऽपि शास्त्रविहितं मिथ्याज्ञानविवर्जिताः । भक्त्या विष्णुं यजन्ते ये निषिद्धाचरणोज्झिताः । तेऽपि यान्ति हरिं शास्त्रविधानस्थाः कुतः पुनः । अशास्त्रविहितं घोरं तप्यन्ते ये तपोधनाः । दम्भाहङ्कारसंयुक्ताः कामरागबलान्विताः । अकृशानपि लक्ष्म्यादीन् देवान् विष्णुपरायणान् । विष्णुं च सर्वदेहस्थं कृशत्वेन विजानते । तेषामल्पगुणत्वेन कल्पनात् ते तमो भ्रुवम् । यान्ति ज्ञेयाश्च ते दैत्याः पिशाचा वाऽथ राक्षसाः । अन्नैश्चैवाथ यज्ञाद्यैः प्रायो ज्ञेया इमे नराः । सात्त्विकाः सात्त्विकान् कुर्युर्यस्मादन्ये तथेतरान् । ओंतत्सदिति यद् विष्णोर्नामत्रयमुदाहृतम् । प्रसिद्धं वैदिकं तस्मात् कर्म सद्विषयं हि सत् । तत्राश्रद्धाकृतं तस्मादसदित्येव कीर्त्यते । विप्रा वेदाश्च यज्ञाश्च यस्मादोताः परस्परम् । विहिता विष्णुना तेन विष्णुरोमिति कीर्तितः । ओतमस्मिन्निदं सर्वमिति चोक्तः स ओमिति । तस्मादोमिति यज्ञादीन् प्रवर्तन्ते हि वैदिकाः। अनोङ्कृतं ह्यासुरं स्याद् यत् तस्मादोङ्कृतं त्वपि । ओङ्कारार्थहरेः सम्यगज्ञानादासुरं भवेत् । फलं त्वनभिसन्धाय तद् ब्रह्म स्यान्ममाऽस्पदम् । इति यत् क्रियते कर्म तन्नामाऽतो जनार्दनः । अभिसन्धितं हि तत् प्रोक्तं ततं वा स्वगुणैः सदा" इत्यादि च । "मयः प्रधानमुद्दिष्टं स्वरूपं कार्यमेवच" इति शब्दनिर्णये ।

शास्त्रविहितमपि भगवच्छ्रद्धाहीनमसदेवेति वक्ष्यति—"अश्रद्धया हुतम्" इति । भगवच्छ्रद्धाविरहितत्वादेवचाशास्त्रविहितं भवति । "विष्णुभक्तिविधानार्थं सर्वं शास्त्रं प्रवर्तते" इति पैङ्गिश्रुतिः ॥४-७॥ स्थिराः स्थिरगुणाः घृतादयः । कट्वादीनामप्यारोग्यरसाद्यर्थत्वेन सात्त्विकत्वमेव । रस्यादीनामपि राजसत्वमनारोग्यादिहेतुत्वे । "दुःखशोकामयप्रदाः" इत्युक्तेः । सत्त्वं साधुभावः । भवति हि सोऽपि शुच्यन्नात् ।

अफलाकाङ्क्षिभिर्यज्ञो विधिदृष्टो य इज्यते ।
यष्टव्यमेवेति मनः समाधाय स सात्त्विकः ॥ ११

अभिसन्धाय तु फलं दम्भार्थमपि चैव यत् ।
इज्यते भरतश्रेष्ठ तं यज्ञं विद्धि राजसम् ॥ १२

विधिहीनमसृष्टान्नं मन्त्रहीनमदक्षिणम् ।
श्रद्धाविरहितं यज्ञं तामसं परिचक्षते ॥ १३

देवद्विजगुरुप्राज्ञपूजनं शौचमार्जवम् ।
ब्रह्मचर्यमहिंसा च शारीरं तप उच्यते ॥ १४

अनुद्वेगकरं वाक्यं सत्यं प्रियहितं च यत् ।
स्वाध्यायाभ्यसनं चैव वाङ्मयं तप उच्यते ॥ १५

मनःप्रसादः सौम्यत्वं मौनमात्मविनिग्रहः ।
भावसंशुद्धिरित्येतत् तपो मानसमुच्यते ॥ १६

सौम्यत्वमक्रौर्यम् । "अक्रूरः सौम्य उच्यते" इत्यभिधानम् । मौनं मननशीलत्वम्—

" बाल्यं च पाण्डित्यं च निर्विद्याथ मुनिः " इति हि श्रुतिः । "एतेन हीदं सर्वं मतम् । यदनेनेदं सर्वं मतं तस्मान्मुनिस्तस्मान्मुनिरित्याचक्षते " इति भाल्लवेयश्रुतिः ।

कथञ्चान्यथा मानसं तपः स्यात् ? ॥१६—२२॥

श्रद्धया परया तप्तं तपस्तत् त्रिविधं नरैः ।
अफलाकाङ्क्षिभिर्युक्तैः सात्त्विकं परिचक्षते ॥ १७

---

"हृद्यं पश्चान्मनोहारि प्रियं तत्कालसौख्यदम् । सुखन्तु दीर्घसुखदं रम्यमभ्यास-सौख्यदम्" इति शब्दनिर्णये ॥ ८ ॥

रूक्षं नीरसम् । तीक्ष्णं सर्षपादि ॥ ९ ॥

"यामान्तरितपाकं तु यातयाममितीर्यते । क्वचिच्च गतसारं स्यान्नियम्यं यातमस्य यत्" इति च । पूर्वं स्वादु पश्चादन्यथाजातं गतरसम्— "शुद्धभागवतानां तु स्वभावापेक्षयैवतु । स्वादुत्वादि विजानीयात् पदार्थानां नचान्यथा" इति सूदशास्त्रे ॥१०॥ ॥११॥ "यागात्तु राजसात् स्वर्गः साङ्कल्पिक उदाहृतः । लोकः स दीनदेवानां सनाम्नां वासवादिभिः । विष्णावश्रद्धयाऽयोग्यकामाच्चैषां पुनर्भवेत् । नरकं च विना यज्ञं राजसं नरलोकगाः । निषिद्धं कर्म कुर्युश्चेदीयुस्ते नरकं ध्रुवम् । कदाचित् सात्त्विकाः कुर्युः कर्म राजसतामसम् । अन्येऽन्यच्च तथाऽप्येषां स्थितिः स्वाभाविकी पुनः । स्वं स्वं कर्म तु सर्वेषां सदैव स्यान्महत्फलम् । अन्यदल्पफलं चैव बाहुल्यं तेषु लक्षणम्" इति पाद्मे ॥ ॥१२-१५॥ मौनं मननम् ॥१६॥ युक्तैः भगवदर्पणादियोगयुक्तैः । युक्तैरिति दानादिषु सर्वत्र समम् ॥

सत्कारमानपूजार्थं तपो दम्भेन चैव यत् ।
क्रियते तदिह प्रोक्तं राजसं चलमध्रुवम् ॥ १८

मूढग्राहेणाऽऽत्मनो यत् पीडया क्रियते तपः ।
परस्योत्सादनार्थं वा तत् तामसमुदाहृतम् ॥ १९

दातव्यमिति यद् दानं दीयतेऽनुपकारिणे ।
देशे काले च पात्रे च तद् दानं सात्त्विकं स्मृतम् ॥ २०

यत्तु प्रत्युपकारार्थं फलमुद्दिश्य वा पुनः ।
दीयते च परिक्लिष्टं तद् राजसमुदाहृतम् ॥ २१

अदेशकाले यद् दानमपात्रेभ्यश्च दीयते ।
असत्कृतमवज्ञातं तत् तामसमुदाहृतम् ॥ २२

ओंतत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः ।
ब्राह्मणास्तेन वेदाश्च यज्ञाश्च विहिताः पुरा ॥ २३

पुनश्च कर्मादीतिकर्तव्यताविधानार्थमर्थवादमाह–ओंतत्सदित्यादिना । परस्य ब्रह्मणो ह्येतानि नामानि–
"ओतं जगद् यत्र स्वयं च पूर्णो वेदोक्तरूपोऽनुपचारतश्च । सर्वैः शुभैश्चापि युतो नचान्यैरोंतत्सदित्येनमतो वदन्ति" इति ह्यृग्वेदखिलेषु । द्वितीयपादस्तच्छब्दार्थः ।
"सदेव सोम्येदमग्र आसीत्" इति च । "ओमिति ब्रह्म" इति च ।
तेन ब्रह्मणा । आत्मपूजार्थम् । वेदविधिर्व्यञ्जनम् । मा तूक्ता पुरस्तात् ॥२३॥२४॥

तस्मादोमित्युदाहृत्य यज्ञदानतपःक्रियाः ।
प्रवर्तन्ते विधानोक्ताः सततं ब्रह्मवादिनाम् ॥ २४

तदित्यनभिसन्धाय फलं यज्ञतपःक्रियाः ।
दानक्रियाश्च विविधाः क्रियन्ते मोक्षकाङ्क्षिभिः ॥ २५

तत् फलं मे स्यादित्यनभिसन्धाय ॥२५॥

---

॥१७–२२॥ सत्सम्बन्धित्वादेव कर्मादि सत् । ओंतत्सदिति नाम्नां विष्णौ प्रसिद्धत्वात् ।
"स्रवत्यनोङ्कृतं ब्रह्म परस्ताच्च विशीर्यते", "अनोङ्कृतमासुरम्" इतिश्रुतेरनोङ्कृतस्याऽसुरत्वप्रसिद्धेः । "अनर्थज्ञोदितो मन्त्रो निरर्थस्त्वाति मानतः । यन्मन्त्रस्तेन कथितो मन्त्रार्थो ज्ञेय एव तत्" इति पैङ्गिश्रुतेश्च ।
तदर्थत्वेन फलानभिसन्धिपूर्वककर्मण एव सात्त्विकत्वाच्च । तद्भक्त्या तत्स्मरणपूर्वकमेव कर्म सत्, अन्यदसदेवेति भावः । राजसस्याप्यसदन्तर्भाव एव । विष्णुश्रद्धारहितत्वात् ।

सद्भावे साधुभावे च सदित्येतत् प्रयुज्यते ।
प्रशस्ते कर्मणि तथा सच्छब्दः पार्थ युज्यते ॥ २६

सद्भावशब्देन प्रजननं सूचितम् । ओमित्युक्त्वाऽनभिसन्धाय फलं यज्ञदानतपआदिकृतामतिप्रीतेर्नामसाम्याद् ब्रह्मैव निष्पादितं भवतीत्याशयः । तथाच ऋग्वेदखिलेषु—

" ओँयज्ञाद्या निष्फलं कर्म तत् स्यात् सद् वै तदर्थं कर्म वदन्ति वेदाः । तच्छब्दानां सन्निधेर्ब्रह्मप्रीतेस्तद्रूपत्वाज्जनितं ब्रह्म तस्य " इति ॥२६—२८॥

इति श्रीमदानन्दतीर्थभगवत्पादविरचिते
श्रीभगवद्गीताभाष्ये
सप्तदशोऽध्यायः

---

यज्ञे तपसि दाने च स्थितिः सदिति चोच्यते ।
कर्म चैव तदर्थीयं सदित्येवाभिधीयते ॥ २७

अश्रद्धया हुतं दत्तं तपस्तप्तं कृतं च यत् ।
असदित्युच्यते पार्थ नच तत् प्रेत्य नो इह ॥ २८

इति श्रीभगवद्गीतायां सप्तदशोऽध्यायः

---

## अष्टादशोऽध्यायः

पूर्वोक्तं साधनं सर्वं सङ्क्षिप्योपसंहरत्यनेनाध्यायेन—

अर्जुन उवाच

संन्यासस्य महाबाहो तत्त्वमिच्छामि वेदितुम् ।
त्यागस्य च हृषीकेश पृथक् केशिनिषूदन ॥ १

---

"सात्त्विकं मोक्षदं कर्म राजसं सृतिदुःखदम् । तामसं पातदं ज्ञेयं तत् कुर्यात् कर्म वैष्णवम्" इत्याग्नेये ॥२३—२८॥

इति श्रीमदानन्दतीर्थभगवत्पादविरचिते
श्रीभगवद्गीतातात्पर्यनिर्णये
सप्तदशोऽध्यायः

भगवानुवाच

काम्यानां कर्मणां न्यासं संन्यासं कवयो विदुः ।
सर्वकर्मफलत्यागं प्राहुस्त्यागं विचक्षणाः ॥ २

फलानिच्छयाऽकरणेन वा काम्यकर्मन्यासः संन्यासः । त्यागस्तु फलत्याग एव । तथाहि प्राचीनशालश्रुतिः—"अनिच्छयाऽकर्मणा वाऽपि काम्यन्यासो न्यासः फलत्यागस्तु त्यागः" इति ॥१॥२॥

त्याज्यं दोषवदित्येके कर्म प्राहुर्मनीषिणः ।
यज्ञदानतपःकर्म न त्याज्यमिति चापरे ॥ ३

मनीषिण इति विशेषणात् पूर्वपक्षोऽपि ग्राह्य एव । फलत्यागेन त्यागो विवक्षितो यज्ञादेस्तत्पक्षे । "यस्तु कर्मफलत्यागी" इति च वक्ष्यति । अत एक एवायं पक्षः ॥ ३ ॥

निश्चयं शृणु मे तत्र त्यागे भरतसत्तम ।
त्यागो हि पुरुषव्याघ्र त्रिविधः सम्प्रकीर्तितः ॥ ४

तत्प्रकारं चाऽऽह— निश्चयमित्यादिना ॥ ४ ॥

यज्ञदानतपःकर्म न त्याज्यं कार्यमेव तत् ।
यज्ञो दानं तपश्चैव पावनानि मनीषिणाम् ॥ ५

एतान्यपितु कर्माणि सङ्गं त्यक्त्वा फलानि च ।
कर्तव्यानीति मे पार्थ निश्चितं मतमुत्तमम् ॥ ६

यज्ञभेद उक्तो "द्रव्ययज्ञाः" इत्यादिना । दाने त्वभयदानमन्तर्भवति । एतेषां मध्ये यत्किञ्चिद् यज्ञादिकं कर्तव्यमेवेत्यर्थः । अन्यथा "ब्रह्मचारी गृहस्थो वा वानप्रस्थो यतिस्तथा । यदीच्छेन्मोक्षमास्थातुमुत्तमाश्रममाश्रयेत्" इत्यादिव्याससमृतिविरोधः । ज्ञानयज्ञा विद्याभयदानब्रह्मचर्यादितपसो हि ते । अतो यद् वचोऽन्यथा प्रतीयते, अधिकारिभेदेन तद् योज्यम् । अन्यथेतरेषां गत्यभावात् ॥ ५-१० ॥

नियतस्य तु संन्यासः कर्मणो नोपपद्यते ।
मोहात् तस्य परित्यागस्तामसः परिकीर्तितः ॥ ७

दुःखमित्येव यत् कर्म कायक्लेशभयात् त्यजेत् ।
स कृत्वा राजसं त्यागं नैव त्यागफलं लभेत् ॥ ८

---

सर्वाध्यायोक्तधर्मस्य समासतो निर्णयात्मकोऽनुक्तत्रैगुण्यवादी चायम् ॥१॥२॥ "मनीषिणः" इत्युक्तत्वात् तेऽप्यनिन्द्याः । अतः "त्याज्यं दोषवत्" इत्यस्यार्थः "सङ्गं त्यक्त्वा फलं च" इति ॥३॥४॥ द्रव्ययज्ञादीनां मध्ये स्वोचितो यज्ञो विद्यादानादिषु स्वोचितं दानं स्वोचितं तपश्च सर्वैर्वर्णाश्रमिभिरन्यैश्च कार्यमेवेत्यर्थः।विष्णुनामस्वाध्यायोऽन्त्यानां सत्योपवासादितपश्च॥५॥६॥सङ्गफलत्यागमृते स्वरूपत्यागः कार्य इति मिथ्याज्ञानाख्यमोहात् । "स्वयज्ञादीन् परित्यज्य निरयं यात्यसंशयम्"

कार्यमित्येव यत् कर्म नियतं क्रियतेऽर्जुन ।
सङ्गं त्यक्त्वा फलं चैव स त्यागः सात्त्विको मतः ॥ ९

न द्वेष्ट्यकुशलं कर्म कुशले नानुषज्जते ।
त्यागी सत्त्वसमाविष्टो मेधावी छिन्नसंशयः ॥ १०

नहि देहभृता शक्यं त्यक्तुं कर्माण्यशेषतः ।
यस्तु कर्मफलत्यागी स त्यागीत्यभिधीयते ॥ ११

अन्यस्त्यागार्थो न युक्त इत्याह— नहीति ॥ ११ ॥

अनिष्टमिष्टं मिश्रं च त्रिविधं कर्मणः फलम् ।
भवत्यत्यागिनां प्रेत्य नतु संन्यासिनां क्वचित् ॥ १२

त्यागं स्तौति—अनिष्टमिति ॥ १२ ॥

पञ्चैतानि महाबाहो कारणानि निबोध मे ।
साङ्ख्ये कृतान्ते प्रोक्तानि सिद्धये सर्वकर्मणाम् ॥ १३

पुनः संन्यासं प्रपञ्चयितुं कर्मकारणान्याह — पञ्चेत्यादिना । साङ्ख्ये कृतान्ते ज्ञानसिद्धान्ते ॥ १३ ॥

अधिष्ठानं तथा कर्ता करणं च पृथग्विधम् ।
विविधाश्च पृथक् चेष्टा दैवं चैवात्र पञ्चमम् ॥ १४

---

इति पाद्मे ॥७॥ मोहं विना दृष्टदुःखमित्येव । दुःखशब्देन केवलं मानसम् । कायक्लेशस्य पृथगुक्तेः ।

"दुःखं तु मानसं ज्ञेयमायासो बाह्य उच्यते । विशेषस्य विवक्षायामन्यथा सर्वमेव तु" इति शब्दनिर्णये ॥८ ॥ ९॥ " न द्वेष्ट्यकुशलं कर्म केवलं दृष्टदुःखदम् । जन्मान्तरकृते पुण्ये न सज्जेत् सात्त्विकश्चले । यः सम्यक् तत्त्वविद् विष्णोस्तदर्पणधियैवतु । फलेच्छावर्जितस्तस्य कर्मबन्धाय नो भवेत् । बहुलं चेदल्पदोषं यावदेवापरोक्षदृक्" इति च ॥१०॥११॥

अन्येषामिष्टम् । अस्य तु त्यागित्वादेव नेष्टम् ।

"ज्ञानादेर्मोक्षभोग्याच्च नान्यत् स्यात् कर्मणः फलम् । त्यागिनस्तत्त्वसंवेत्तुरन्येषां तद्वते फलम्" इति च ।

केवलकाम्यकर्मणां परापेक्षयाऽप्यकरणमित्येतावांस्त्यागात् संन्यासस्य विशेष इत्यत्यागिनां प्रतियोगित्वेन न्यासिन उक्ताः । त्यागित्वं तेषामपि ह्यस्ति ।

"परेच्छयाऽपि ये काम्यं कर्म कुर्युर्नतु क्वचित् । न्यासिनो नाम तेऽन्येभ्यः फलत्यागिभ्य उत्तमाः" इति च ॥१२॥ "कथितं परमं साङ्ख्यं कपिलाख्येन विष्णुना । सेश्वरं वैदिकं साक्षाज्ज्ञेयमन्यदवैदिकम्" इति च ॥१३॥

अधिष्ठानं देहादिः। कर्ता विष्णुः। स हि सर्वकर्तेत्युक्तम्। जीवस्य चाकर्तृत्वे प्रमाणमुक्तम्। करण-मिन्द्रियादि। चेष्टाः क्रियाः। हस्तादिक्रियाभिर्हि होमादिकर्माणि जायन्ते। ध्यानादेरपि मानसी चेष्टा कारणम्। पूर्वतनी चेष्टाऽपि संस्कारकारणत्वेन भवति। दैवमदृष्टम्। तथाचायास्यश्रुतिः— "देहो ब्रह्मार्थेन्द्रियाद्याः क्रियाश्च तथाऽदृष्टं पञ्चमं कर्महेतुः" इति ॥ १४ ॥ १५ ॥

शरीरवाङ्मनोभिर्यत् कर्म प्रारभते नरः।
न्याय्यं वा विपरीतं वा पञ्चैते तस्य हेतवः ॥ १५

तत्रैवं सति कर्तारमात्मानं केवलं तु यः।
पश्यत्यकृतबुद्धित्वान्न स पश्यति दुर्मतिः ॥ १६

केवलं निष्क्रियम्। "एनं केवलमात्मानं निष्क्रियत्वाद् वदन्ति हि" इति तत्रैव ॥ १६ ॥

यस्य नाहङ्कृतो भावो बुद्धिर्यस्य न लिप्यते।
हत्वाऽपि स इमान् लोकान् न हन्ति न निबद्ध्यते ॥ १७

तज्ज्ञानं स्तौति— यस्येति। यस्त्वीषद् बद्ध्यते स ईषदहङ्कारी च ॥ १७ ॥

ज्ञानं ज्ञेयं परिज्ञाता त्रिविधा कर्मचोदना।
करणं कर्म कर्तेति त्रिविधः कर्मसङ्ग्रहः ॥ १८

एवं तर्हि न पुरुषमपेक्ष्य विधिः, अकर्तृत्वादित्यत आह— ज्ञानमिति। त्रिविधा कर्मचोदना। एतत् त्रिविधमपेक्ष्य कर्मविधिरिति त्रिविधेत्युच्यते। कारणानि सङ्क्षिप्याऽह— करणमिति।

---

अधिष्ठानं शरीरादि ॥१४—१६॥

"स्वातन्त्र्यमीश्वरे वेत्ति नैवाऽत्मनि कदाचन। ईश्वराधीनमेवाऽत्मन् स्वातन्त्र्यं तु जडान् प्रति। तारतम्येन लक्ष्म्यादेर्जीवान् प्रति च सर्वशः। यस्तदर्थं समुत्पन्नो यथा रुद्रो यथा यमः। हत्वाऽपि स इमान् लोकान् न हन्ति न निबद्ध्यते। अज्ञस्तदर्थं जातोऽपि बद्ध्यते दैत्यवद् ध्रुवम्। अपरोक्षदृङ् न जातो यस्तदर्थं मुक्तिगं सुखम्। ह्रसेत् तस्य परोक्षज्ञः किञ्चिद् दोषेण लिप्यते" इति च।

अस्वातन्त्र्यज्ञानाद्धन्मीति भावोऽप्यस्य नास्तीति न हन्ति। अन्यस्य भावोऽस्तीति विशेषः। "बुद्धिर्यस्य न लिप्यते" इति। रागान्न हन्ति, किन्तु धर्मबुद्ध्या।

"स्वातन्त्र्यं मन्यमानस्य रागाद् धर्मं च कुर्वतः। तन्निमित्तस्तु दोषः स्याद् गुणस्तु स्यात् स्वकर्मजः" इति च ॥१७॥ "सम्प्रेरयितुरीशस्य कर्मस्वखिलचेतनान्। ज्ञातृज्ञेय-ज्ञानरूपा प्रेरणा सा स एव यत्। स्वरूपेणैव नित्या सा विशेषात्मतया भवेत्। विशेषोऽपि स्वरूपेण नित्यश्च स्याद् विशेषतः। स्वनिर्वाहकता यस्मान्नानवस्था विशिष्टवत्। विशेष्यस्य विशिष्टस्याप्यभेदेऽपि विवादिनि। विशेषोऽस्त्वेव नात्रास्ति ह्यनवस्था कदाचन। ज्ञातुरन्योऽहमिति तु कस्याप्यनुभवो नहि। अस्मि ज्ञातैवाहमिति भेदस्तस्मात् तयोः कुतः। पश्यामीति विशेषोऽयमिदानीं मे समुत्थितः। इत्याद्यनुभवाद् भेदो न

कर्मसङ्ग्रहः कर्मकारणसङ्क्षेपः । अधिष्ठानादि करण एवान्तर्भूतम् । तथाह्यृग्वेदखिलेषु—

"ज्ञानं ज्ञेयं ज्ञानिनं चाप्यपेक्ष्य विधिरुत्थितः । करणं चैव कर्ता च कर्म कारणसङ्ग्रहः" इति । अकर्तृत्वेऽपि विधिद्वारेश्वरप्रसादादिच्छोत्पत्त्योक्तकारणैः कर्मद्वारा पुरुषार्थो भवतीति । ईश्वराधीनत्वेऽपि विधिद्वारा नियतस्तेनैव । यदि चेच्छादिर्जायते तर्हि कारितमेवेश्वरेण । फलं च नियतम् । वस्तुतोऽकर्तृत्वेऽप्याभिमानिकं कर्तृत्वं तस्यैव । स्वातन्त्र्यं च जडमपेक्ष्येति न प्रवृत्तिविधिवैयर्थ्यम् । सर्वं चैतदनुभवोक्तप्रमाणसिद्धमिति न पृथक् प्रमाणमुच्यते ॥ १८ ॥

ज्ञानं कर्म च कर्ता च त्रिधैव गुणभेदतः ।
प्रोच्यते गुणसङ्ख्याने यथावच्छृणु तान्यपि ॥ १९

पुनः साधनप्रथनाय गुणभेदानाह– ज्ञानमित्यादिना । गुणसङ्ख्याने गुणगणनप्रकरणे ॥ १९ ॥

सर्वभूतेषु येनैकं भावमव्ययमीक्षते ।
अविभक्तं विभक्तेषु तज्ज्ञानं विद्धि सात्त्विकम् ॥ २०

एकं भावं विष्णुम् ॥ २०-२७ ॥

पृथक्त्वेन तु यज्ज्ञानं नानाभावान् पृथग्विधान् ।
वेत्ति सर्वेषु भूतेषु तज्ज्ञानं विद्धि राजसम् ॥ २१

---

विशेष्यविशिष्टयोः । विशेषणं तु द्विविधं विशेषाख्यं तथेतरत् । विशेषमणयेद् येन प्रोक्तं तेन विशेषणम् । विशेषोऽपि विशेषस्य स्वस्यैव गमको भवेत्" इत्यादि तत्त्वविवेके । सङ्ग्रहः पञ्चकारणानां सङ्क्षेपः । अधिष्ठानस्य करणेऽन्तर्भावात् । दैवशब्दोदितेश्वरस्यैव मुख्यकर्तृत्वात् स्वतन्त्रास्वतन्त्रकर्त्रोः कर्तृशब्देनैवोक्तेस्त्रैविध्यम् । कर्म चेष्टा ॥ १८ ॥ एवं गुणसङ्ख्याने परमसाङ्ख्यशास्त्रे ॥१९॥

"अस्तित्वाद् भूतनामभ्यः सर्वजीवेभ्य एव च । मुक्तेभ्योऽपि पृथक्त्वेन विष्णोः सर्वत्रगस्य च । ऐक्येन च स्वरूपाणां प्रादुर्भावादिकात्मनाम् । तारतम्येन जीवानां भेदेनैव परस्परम् । जडेभ्यश्चैव जीवानां जडानां च परस्परम् । तेभ्यो विष्णोश्च सम्यक् तल्लक्षणज्ञानपूर्वकम् । ज्ञानं सात्त्विकमुद्दिष्टं यत् साक्षान्मोक्षकारणम् ॥ २० ॥ विष्णोरन्यस्य याथार्थ्यज्ञानं राजसमुच्यते । यदि विष्णुं न जानाति यदिवा मिश्रतत्त्ववित् । अन्यथाकरणीयत्वात् कार्याख्यं जीवमेव यः । अकार्यं ब्रह्म जानाति स एवाखिलमित्यपि । एकजीवपरिज्ञानात् कृत्स्नज्ञोऽस्मीति मन्यते । युक्तिभिर्ज्ञानराहित्यात् स्वपक्षस्याल्पयुक्तितः । अयुक्ततामेव गुणं मन्यते चाल्पदर्शनः । अतत्त्वार्थं जगद् ब्रूते तत्त्वार्थज्ञानवर्जनात् । स मुख्यतामसज्ञानी ह्येकैकेनापि किं पुनः । सर्वैरेतैर्विशेषैश्च युक्तः पापतमाधिकः" इति पाद्मे ।

"पृथक्त्वेन तु यज्ज्ञानम्"इत्यस्य व्याख्या—"नानाभावान्"इत्यादि । सर्वगतमेकमीश्वरं न जानातीत्येतावतैव राजसत्वम् । एकस्य कृत्स्नवज्ज्ञानमेव तामसम् । मुक्तत्वादिरूपेणान्यथाकरणीयत्वात् पराधीनत्वेनाल्पस्य जीवस्य स्वातन्त्र्यादिगुणपूर्णत्वात् कृत्स्नेन ब्रह्मणैक्यज्ञानं च महातामसम् ।

यत्तु कृत्स्नवदेकस्मिन् कार्ये सक्तमहैतुकम् ।
अतत्त्वार्थवदल्पं च तत् तामसमुदाहृतम् ॥ २२

नियतं सङ्गरहितमरागद्वेषतः कृतम् ।
अफलप्रेप्सुना कर्म यत् तत् सात्त्विकमुच्यते ॥ २३

यत्तु कामेप्सुना कर्म साहङ्कारेण वा पुनः ।
क्रियते बहुलायासं तद्राजसमुदाहृतम् ॥ २४

अनुबन्धं क्षयं हिंसामनपेक्ष्य च पौरुषम् ।
मोहादारभ्यते कर्म यत् तत् तामसमुच्यते ॥ २५

मुक्तसङ्गोऽनहंवादी धृत्युत्साहसमन्वितः ।
सिद्ध्यसिद्ध्योर्निर्विकारः कर्ता तामस उच्यते ॥ २६

रागी कर्मफलप्रेप्सुर्लुब्धो हिंसात्मकोऽशुचिः ।
हर्षशोकान्वितः कर्ता राजसः परिकीर्तितः ॥ २७

अयुक्तः प्राकृतः स्तब्धः शठो नैकृतिकोऽलसः ।
विषादी दीर्घसूत्री च कर्ता तामस उच्यते ॥ २८

परकृतं दोषं दीर्घकालकृतमप्यनुचितं यः सूचयति स दीर्घसूत्री—

"परेण यः कृतो दोषो दीर्घकालकृतोऽपिवा । यस्तस्य सूचको दोषाद् दीर्घसूत्री स उच्यते" इत्यभिधानात् ॥ २८-३० ॥

---

किंपुनस्तावन्मात्रं सर्वमिति ज्ञानम् । किं पुनस्तत्राप्येकजीवादन्यत् किमपि नास्तीति । अहैतुकं ज्ञानं सर्वमपि तामसम् । किमु तदेवोक्तलक्षणम्। अतत्त्वार्थवत् सदसद्वैलक्षण्याद्यन्यथार्थकल्पनायुक्तमेव तामसम् । किमु तदेवोक्तविशेषणैर्युक्तम् । प्रायोऽल्पज्ञानमपि तामसम् । अज्ञानबहुलत्वात् । किमु तदेवोक्तमिथ्याज्ञानबहुलमित्यपुनरुक्तिः । एकस्मिन् सर्वज्ञानं कार्ये जीवे पूर्णब्रह्मेति सक्तं ज्ञानं निर्युक्तिकं चातत्त्वार्थकल्पनायुक्तमल्पज्ञानं च पृथक्पृथक् तामसानीति वा । मायावादे त्वेतानि समस्तानि । अन्यत्रापि त्वहैतुकत्वादिकं विरुद्धवादेषु समं सर्वेषु ॥ २१ ॥ २२ ॥ "मयि सर्वाणि कर्माणि संन्यस्याध्यात्मचेतसा" इत्युक्त्वा "ये मे मतम्", "ये त्वेतत्" इति च तस्य मोक्षसाधनस्याकरणे प्रत्यवायस्य चोक्तेर्भगवदर्पितत्वेन सर्वकर्मकरणं तस्य विष्णोः सर्वपरमत्वज्ञानं च नियतमेवेति ज्ञायते । "अध्यात्मचेतसा" इत्युक्तत्वात् तत्स्वरूपयाथार्थ्यज्ञानादि । "ये तु सर्वाणि कर्माणि" इत्यस्मिन् श्लोकेऽध्यात्मचेतस्त्वस्य "मत्पराः । अनन्येनैव योगेन मां ध्यायन्तः" इति व्याख्यातत्वात् । एवं सर्वमपि भगवद्भक्तियुक्तमेव सात्त्विकम् ॥ २३–२५ ॥ सर्वस्य भगवदधीनत्वज्ञानादेवानहंवादी ॥ २६ ॥ २७ ॥

बुद्धेर्भेदं धृतेश्चैव गुणतस्त्रिविधं शृणु ।
प्रोच्यमानमशेषेण पृथक्त्वेन धनञ्जय ॥ २९

प्रवृत्तिं च निवृत्तिं च कार्याकार्ये भयाभये ।
बन्धं मोक्षं च या वेत्ति बुद्धिः सा पार्थ सात्त्विकी ॥ ३०

यया धर्ममधर्मं च कार्यं चाकार्यमेवच ।
अयथावत् प्रजानाति बुद्धिः सा पार्थ राजसी ॥ ३१

यथार्थत्वनियमाभावो राजस्याः । अन्यथा तामस्या भेदाभावात् ॥३१-४८॥

अधर्मं धर्ममिति या मन्यते तमसाऽऽवृता ।
सर्वार्थान् विपरीतांश्च बुद्धिः सा पार्थ तामसी ॥ ३२

धृत्या यया धारयते मनःप्राणेन्द्रियक्रियाः ।
योगेनाव्यभिचारिण्या धृतिः सा पार्थ सात्त्विकी ॥ ३३

यया तु धर्मकामार्थान् धृत्या धारयतेऽर्जुन ।
प्रसङ्गेन फलाकाङ्क्षी धृतिः सा पार्थ राजसी ॥ ३४

यया स्वप्नं भयं शोकं विषादं मदमेवच ।
न विमुञ्चति दुर्मेधा धृतिः सा पार्थ तामसी ॥ ३५

सुखं त्विदानीं त्रिविधं शृणु मे भरतर्षभ ।
अभ्यासाद् रमते यत्र दुःखान्तं च निगच्छति ॥ ३६

यत् तदग्रे विषमिव परिणामेऽमृतोपमम् ।
तत् सुखं सात्त्विकं प्रोक्तमात्मबुद्धिप्रसादजम् ॥ ३७

---

"भगवद्भक्तिसामर्थ्यात् प्रकृष्टो न कृतो हि यः । स प्राकृतो दीर्घसूत्री कुर्यां पश्चादिति स्मरन्" इति शब्दतत्त्वे । प्रातकालस्य कर्मणो दीर्घकालेनैव कृतिं सूचयन् दीर्घसूत्रीत्यर्थः । "अलसो दीर्घसूत्री च सत्त्वयुक् तामसो मतः । अयुक्तो राजसः स्तब्धः प्राकृतो निकृतिः शठः । एकैकेनैव दोषेण प्रोक्तस्तामसतामसः । दुर्नरत्वं च तिर्यक्त्वं तमश्चैतत्फलं क्रमात्" इति च ॥२८-३०॥ "किञ्चिद् यथावद् धर्मादीनयथावच्च पश्यति । यया बुद्ध्या राजसी सा मिथ्यादृक् त्वेव तामसी" इति च ॥३१॥ ३२॥ "वैष्णवो भक्तियोगो यस्तद्युक्ता सात्त्विकी धृतिः" इति च । विहितविषयैवेत्यव्यभिचारिणी ॥३३॥ ३४॥ "स्वप्नं भयम्" इत्यादि सर्वनिषिद्धोपलक्षणम् । "तत्तत् सात्त्विकमेव स्याद् यद्यद् वृद्धाः प्रचक्षते । निन्दन्ति तामसं तत्तद् राजसं तदुपेक्षितम्" इति भागवते । "महात्मानस्तु

विषयेन्द्रियसंयोगाद् यत्तदग्रेऽमृतोपमम् ।
परिणामे विषमिव तत् सुखं राजसं स्मृतम् ॥ ३८
यदग्रे चानुबन्धे च सुखं मोहनमात्मनः ।
निद्रालस्यप्रमादोत्थं तत् तामसमुदाहृतम् ॥ ३९
न तदस्ति पृथिव्यां वा दिवि देवेषु वा पुनः ।
सत्त्वं प्रकृतिजैर्मुक्तं यदेभिः स्यात् त्रिभिर्गुणैः ॥ ४०

---

मां पार्थ", "अभयं सत्त्वसंशुद्धिः" इत्यादिना वृद्धाश्चोक्ताः ॥ ३५ ॥ ३६ ॥ "विष्णोः प्रसादात् स्वमनःप्रसादात् सात्त्विकं सुखम्" इति पाद्मे ॥ ३७-३९ ॥

सत्त्वं जीवजातम् । मुक्तानां गुणातीतत्वात् "पृथिव्यां दिवि देवेषु च" इति विशेषः ।

"यथेष्टं सञ्चरन्तोऽपि मुक्ता भूम्यादिगा नतु । ग्रामस्था अपि न ग्राम्या वैलक्षण्याद्धि सज्जनाः । नराधमास्तामसेषु सात्त्विकास्तत्र राजसाः । दैत्यभृत्या महादैत्या मुख्यतामसतामसाः । राजसास्तु नरास्तत्र विप्रा राजससात्त्विकाः । तत्रस्थशुद्धसत्त्वास्तु परहंसाः प्रकीर्तिताः । हंसो बहूदः कुटिजो वनस्थो नैष्ठिको गृही । क्रमाद् रजोधिका बाह्यं कर्मैषामधिकं यतः । धर्माः परमहंसानां ब्राह्मा एव शमादिकाः । देवादेः कर्मबाहुल्यं न लिङ्गं रजसः क्वचित् । नहि विष्णोश्चलेत् तेषां मनः कर्मकृतावपि । अन्येषां चलचित्तत्वात् प्रायः स्यात् कर्म राजसम् । यदि तत् स्मारकं विष्णोर्विद्यात् सात्त्विकमेव तु । धर्मार्थहिंसनाऽग्निश्च विशेषो ब्रह्मचारिणः । पैतृकं चापि यतितो दारास्तु गृहिणस्ततः । असर्गो ग्राम्यसन्त्यागः पश्वहिंसा गृहस्थतः । वनस्थस्य विशेषोऽयं सर्वेषामितरत् समम्" इति च । "सात्त्विकाः स्वल्परजसः क्षत्रियाः सत्त्वराजसाः । वैश्याः शूद्रा अतिस्वल्पसत्त्वाधिक्येन तामसाः । येतु भागवता वर्णास्तेषां भेदोऽयमीरितः । सत्त्वाधिकः पुल्कसोऽपि यस्तु भागवतः सदा । त्रैविद्यमात्रा विष्णोर्ये सर्वाधिक्ये ससंशयाः । अन्याधिक्यं न मन्यन्ते श्रीशाद् राजसराजसाः । अज्ञा विष्णौ द्वेषहीनाः सर्वे राजसतामसाः । पितृगन्धर्वपूर्वाश्च मुनयो देवता इति । सात्त्विकास्त्रिविधास्तत्र श्रेष्ठा एवोत्तरोत्तराः । देवा इन्द्रो विरिञ्चाद्या इति त्रेधैव देवताः । क्रमोत्तराः शिवो वाणी ब्रह्मा चैवोत्तरोत्तराः । सत्त्वसत्त्वमहासत्त्वसूक्ष्मसत्त्वश्चतुर्मुखः । तस्माद् यावद् विमुक्तिः स्यान्मुक्तावेवं सुखक्रमः" इति च ।

विष्णौ किञ्चित्प्रीतियुक्तास्तामसमध्ये सात्त्विका नराधमा इत्यर्थः । राजसानां मध्ये सात्त्विका एव भागवतविप्रादयः । राजसस्थसात्त्विकेष्वेव शुद्धसात्त्विकाः किञ्चिद्रजोयुक्तसात्त्विकाः समरजोयुक्तसात्त्विकाः सत्त्वात् किञ्चिदूनतमोयुक्तसात्त्विका इति वर्णभेदः । सत्त्वप्रधानत्वादेतानारभ्योत्तरोत्तरं सर्वेऽपि मोक्षयोग्याः । "सत्त्वात् सञ्जायते ज्ञानम्" इत्यादेः ।

"सत्त्वाधिको मोक्षयोग्यो योग्योऽन्धतमसस्तथा । तमउत्तरो रजोभूयान् समो वा सृतिपात्रकः" इति ॥ ४० ॥ ४१ ॥ "शमो दमस्तपः शौचं क्षान्तिरार्जवमेव च । ज्ञानं

ब्राह्मणक्षत्रियविशां शूद्राणां च परन्तप ।
कर्माणि प्रविभक्तानि स्वभावप्रभवैर्गुणैः ॥ ४१

शमो दमस्तपः शौचं क्षान्तिरार्जवमेवच ।
ज्ञानं विज्ञानमास्तिक्यं ब्रह्मकर्म स्वभावजम् ॥ ४२

शौर्यं तेजो धृतिर्दाक्ष्यं युद्धे चाप्यपलायनम् ।
दानमीश्वरभावश्च क्षात्रं कर्म स्वभावजम् ॥ ४३

कृषिगोरक्षवाणिज्यं वैश्यकर्म स्वभावजम् ।
परिचार्यात्मकं कर्म शूद्रस्यापि स्वभावजम् ॥ ४४

---

विज्ञानमास्तिक्यं विप्रकर्म स्वभावजम्। एते गुणाः किञ्चिदूना विप्रात् क्षत्रिय एव च। अधिका वा ब्राह्मणेभ्यः केषुचिच्चक्रवर्तिषु। ऋषयस्त्वेव विज्ञेयाः कार्तवीर्यादयो नृपाः ॥४२॥ शौर्यं तेजो धृतिर्दाक्ष्यं युद्धे चाप्यपलायनम्। दानमीश्वरभावश्च क्षत्रियेऽन्ये गुणा अपि ॥४३॥ क्षत्रियोनब्रह्मगुणो वैश्यः कृष्यादिजीवनः। तत ऊनः शमाद्यैर्यः शुश्रूषुः शूद्र उच्यते। अधिकाश्चेद् गुणाः शूद्रे ब्राह्मणादिः स उच्यते। ब्राह्मणोऽप्यल्पगुणकः शूद्र एवेति कीर्तितः। नरोऽपि यो देवगुणो देवो ज्ञेयो नृतां गतः" इति च।
"स्वकर्मणा तमभ्यर्च्य" इति वचनात् क्षत्रियादिष्वपि शमाद्यनुवृत्तिर्ज्ञायते। नहि शमादिकं विना तस्याभितोऽर्चनं भवति। सम्यक् शमादिभिरर्चनं ह्यभ्यर्चनम्। नच शमादीन् विना सिद्धिं विन्दति। "यज्ञदानतपःकर्म न त्याज्यम्" इत्युक्तत्वाच्च। "शमो मन्निष्ठता बुद्धेर्दम इन्द्रियनिग्रहः" इति भागवते। नच क्षत्रियादिभिरपि शौचतपःशमादिभिर्हीनैर्भाव्यमिति तत्तद्धर्मेषूच्यते। युक्ता ह्येतैः सर्वगुणैर्जनकतुलाधारादयः। अतो युद्धेऽपलायनमैश्वर्यं च क्षत्रियस्य विशेषगुणौ। तौ च, कृष्यादयः, जीवनार्थं शुश्रूषा, याजनं जीवनार्थं प्रतिग्रहश्चेत्येत एवान्येषां परधर्माः।

"शौर्यं तेजो धृतिर्दाक्ष्यं दानं च क्षत्रियेऽधिकाः। तद्धीना ब्राह्मणे तस्माद् वैश्ये शूद्रे ततोऽल्पकाः। अध्यापनं च शुश्रूषा जीवनार्थमृते सताम्। विप्रादिषु क्रमाज्ज्ञेयाः शूद्रस्याध्यापनं विना। तस्माच्छूद्रोऽल्पशुश्रूषुः स्वभावाज्जीवनं विना। एते नैसर्गिका भावाः स्याद् भावोऽन्योऽपि कुत्रचित्। बलाद् विरुद्धभावस्तु हेयः स्वाभिविकोऽपि यः। अनिसर्गोऽपिहि शुभो वर्धनीयः प्रयत्नतः। याजनैश्वर्यपूर्वास्तु नान्यैः कार्या [ः] शुभा अपि। अपलायनं च शूद्राणां ब्रह्मक्षत्रार्थमिष्यते" इति च। "प्रसह्य वित्ताहरणं शारीरो दण्ड एवच। अशिष्याणां शासनं च तथैवार्थविनाशनम्। एष ईश्वरभावः स्यान्न कार्यः क्षत्रियेतरैः। सर्वे विधर्मिणः शास्याः क्षत्रियैर्यत्नतः सदा। अङ्गाद्यहानिकृद् दण्डः शिष्येषु ब्राह्मणादिभिः। कार्यो देहेऽपि शिष्यश्च स्वामिना स्वेन वाऽर्पितः। पुत्रानुजादयः सर्वे शिष्या एव निसर्गतः। गुरवश्चैव मित्राणि सखिसब्रह्मचारिणः। सम्बन्धिनश्च सर्वेऽपि तत्तद्योग्यतयाऽखिलैः। शिक्षणीयेषु भावेषु शिक्षणीयाः प्रय-

स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः ।
स्वकर्मनिरतः सिद्धिं यथा विन्दति तच्छृणु ॥ ४५

यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम् ।
स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः ॥ ४६

श्रेयान् स्वधर्मो विगुणः परधर्मात् स्वनुष्ठितात् ।
स्वभावनियतं कर्म कुर्वन्नाऽप्नोति किल्बिषम् ॥ ४७

सहजं कर्म कौन्तेय सदोषमपि न त्यजेत् ।
सर्वारम्भा हि दोषेण धूमेनाग्निरिवावृताः ॥ ४८

असक्तबुद्धिः सर्वत्र जितात्मा विगतस्पृहः ।
नैष्कर्म्यसिद्धिं परमां संन्यासेनाधिगच्छति ॥ ४९

नैष्कर्म्यसिद्धिं नैष्कर्म्यफलां योगसिद्धिम् ॥ ४९ ॥

सिद्धिं प्राप्तो यथा ब्रह्म तथाऽऽप्नोति निबोध मे ।
समासेनैव कौन्तेय निष्ठा ज्ञानस्य या परा ॥ ५०

यथा येनोपायेन सिद्धिं प्राप्तो ब्रह्माप्नोति तथा निबोध । या सिद्धिर्ज्ञानस्य परा निष्ठा ॥५०-५२॥

---

ततः । उन्मादे बन्धनाद्यैर्वा ताडनं न गुरोः क्वचित् । पापं चरन्तस्त्वन्येऽपि सर्वै-र्दृष्टिपथं गताः । शक्तितो वारणीयाः स्युर्देशकालानुसारतः । तदुत्तमविरोद्धारः सन्त्याज्या गुरवोऽपितु । यथाशक्त्यनुशास्यैव कालतोऽपि न चेच्छुभाः । विष्णौ परमभक्तस्तु न त्याज्यः शास्य एवच । शिक्षयंश्च गुरून् शिष्यो गुरुवन्नैव शिक्षयेत् । महान्तो नानुशास्याश्च विरुद्धाचरिता अपि । यदि च स्वाधिकानां ते विरोधं नैव कुर्वते" इत्यादि च । "आपत्सु विप्रः क्षात्रं तु विशां वा धर्ममाचरेत् । क्षात्रासिद्धौ न शूद्रस्तु विप्रक्षत्रिययोः क्वचित् । क्षत्रियो ब्राह्ममापत्सु तदापत्सु विशामपि । क्षत्रियो विप्रधर्मोऽपि नैवाभैक्षप्रतिग्रही । वैश्य आपत्सु शौद्रं तु धर्ममेकं नचापरम् । शूद्र आपत्सु विड्धर्मा तदापत्सु च कारुकः । शूद्रस्तु वैश्यधर्माऽपि नैव वेदाक्षरो भवेत् । अत्यापदि क्षत्रियोऽपि पादशुश्रूषणं विना । शौद्रधर्मं चरन् विप्रक्षत्रियेषु न दुष्यति । येषु कर्मसु याच्यः स्यात् स्वामिनाऽपि न याचिता । शौद्राण्यपि स्वधर्मत्वे क्षत्रिय-स्याऽपदो यदि । आत्मनश्चेद् बलाधिक्यं सानुबन्धादपि प्रभोः । धर्मार्थं सेवतोऽर्थार्थं विप्रधर्माधिकाद् वरः । प्रभुणा याच्यवृत्तिस्तु विशेषेणापि धर्मभाक् । बाह्वोर्बला-धिको यः स्यात् क्षत्रियो विद्ययाऽधिकः । विप्रो भागवतौ चैतौ सेशा लोकास्तयोरिमे" इत्यादि व्यासस्मृतौ ॥ ४४-४८ ॥

"नैष्कर्म्यसिद्धिम्" अनिष्टसर्वकर्मनाशाख्यसिद्धिम् ॥४९॥ वक्ष्यमाणप्रकारेण वर्तमानस्तदनन्तरं

 

बुद्ध्या विशुद्धया युक्तो धृत्याऽऽत्मानं नियम्य च ।
शब्दादीन् विषयांस्त्यक्त्वा रागद्वेषौ व्युदस्य च ॥ ५१

विविक्तसेवी लघ्वाशी यतवाक्कायमानसः ।
ध्यानयोगपरो नित्यं वैराग्यं समुपाश्रितः ॥ ५२

अहङ्कारं बलं दर्पं कामं क्रोधं परिग्रहम् ।
विमुच्य निर्ममः शान्तो ब्रह्मभूयाय कल्पते ॥ ५३

ब्रह्मभूयाय कल्पते । ब्रह्मणि भावो ब्रह्मभूयम् । ब्रह्मणि स्थितिः । सर्वदा तन्मनस्कतेत्यर्थः ॥५३-५५॥

ब्रह्मभूतः प्रसन्नात्मा न शोचति न काङ्क्षति ।
समः सर्वेषु भूतेषु मद्भक्तिं लभते पराम् ॥ ५४

भक्त्या मामभिजानाति यावान् यश्चास्मि तत्त्वतः ।
ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम् ॥ ५५

सर्वकर्माण्यपि सदा कुर्वाणो मद्व्यपाश्रयः ।
मत्प्रसादादवाप्नोति शाश्वतं पदमव्ययम् ॥ ५६

पुनरन्तरङ्गसाधनान्युक्त्वोपसंहरति— सर्वकर्माणीत्यादिना ॥ ५६-६० ॥

चेतसा सर्वकर्माणि मयि संन्यस्य मत्परः ।
बुद्धियोगमुपाश्रित्य मच्चित्तः सततं भव ॥ ५७

---

नैष्कर्म्यसिद्धिं प्राप्तो भूत्वा ब्रह्माख्याया महालक्ष्म्याः सकाशं यथाऽऽप्नोति तथा निबोध। "मम योनिर्महद् ब्रह्म","ब्रह्मणो हि प्रतिष्ठाऽहम्"इत्युक्तत्वात् ।"ब्रह्मभूतः प्रसन्नात्मा"इत्युक्त्वा"मद्भक्तिं लभते पराम्" इति वक्ष्यमाणत्वाच्च ।

"सर्वपापक्षयाद् देहं त्यक्त्वा देवान् क्रमाद् व्रजन् । प्राप्य लक्ष्मीं तत्प्रसादात् पुनः स्वृद्धा हरौ यदा । भक्तिस्तया पुनर्ज्ञाने स्वृद्धे विष्णुं प्रपद्यते। अपरोक्षदृशो विष्णोः शरीरेऽपि सतः पुरा । त्यक्तदेहादिकस्यापि यावद् विष्णुं प्रपद्यते। तावद् गुणा विवर्धन्ते स्थिताः स्युः प्राप्य केशवम्" इति महावराहे ॥५०-५२॥

"विमुच्य निर्ममः शान्तः" नैष्कर्म्यसिद्धिं प्राप्तो भूत्वा ब्रह्मणि भूयाय भवतीत्यर्थः ॥५३-५५॥ विहितानि सर्वकर्माण्यपि मद्व्यपाश्रयो भूत्वा सदा कुर्वाणः । नहि यथेष्टचरणे तात्पर्यमत्र । तथा सति विहिताकरणेऽपि समत्वात् "मामनुस्मर युद्ध्य च", "ततः स्वधर्मं कीर्तिं च" इत्यादि-प्रस्तुतविरोधः । अपिशब्दस्त्वेकमपि कर्मातदाश्रयेण न कार्यमित्यर्थे ॥५६॥ भगवत्संश्रितस्य त्रैविद्यस्य च मनसैव विशेष इत्याह—चेतसा सर्वकर्माणीति । स एव सर्वस्मात् परम इति भावोऽस्येति मत्परः । तत्र चित्तवृत्तिनिरोधोऽपि बुद्धियोगः प्रत्याहारादिः ॥५७॥५८॥

मच्चित्तः सर्वदुर्गाणि मत्प्रसादात् तरिष्यसि ।
अथ चेत् त्वमहङ्कारान्न श्रोष्यसि विनङ्क्ष्यसि ॥ ५८

यदहङ्कारमाश्रित्य न योत्स्य इति मन्यसे ।
मिथ्यैष व्यवसायस्ते प्रकृतिस्त्वां नियोक्ष्यति ॥ ५९

स्वभावजेन कौन्तेय निबद्धः स्वेन कर्मणा ।
कर्तुं नेच्छसि यन्मोहात् करिष्यस्यवशोऽपि तत् ॥ ६०

ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति ।
भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया ॥ ६१

परोक्षवचनं तु द्रोणं प्रति भीमवचनवत् ॥६१–६५॥

तमेव शरणं गच्छ सर्वभावेन भारत ।
तत्प्रसादात् परां शान्तिं स्थानं प्राप्स्यसि शाश्वतम् ॥ ६२

इति ते ज्ञानमाख्यातं गुह्याद् गुह्यतरं मया ।
विमृश्यैतदशेषेण यथेच्छसि तथा कुरु ॥ ६३

सर्वगुह्यतमं भूयः शृणु मे परमं वचः ।
इष्टोऽसि मे दृढमिति ततो वक्ष्यामि ते हितम् ॥ ६४

मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ।
मामेवैष्यसि सत्यं ते प्रतिजाने प्रियोऽसि मे ॥ ६५

सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज ।
अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः ॥ ६६

धर्मत्यागः फलत्यागः। कथमन्यथा युद्धविधिः? "यस्तु कर्मफलत्यागी स त्यागीत्यभिधीयते" इति चोक्तम् ॥ ६६-७८ ॥

पूर्णादोषमहाविष्णोर्गीतामाश्रित्य लेशतः ।
निरूपणं कृतं तेन प्रीयतां मे सदा विभुः ॥

इति श्रीमदानन्दतीर्थभगवत्पादविरचिते
श्रीभगवद्गीताभाष्येऽष्टादशोऽध्यायः

---

समाप्तं चेदं भाष्यम्

---

इदं ते नातपस्काय नाभक्ताय कदाचन ।
नचाशुश्रूषवे वाच्यं नच मां योऽभ्यसूयति ॥ ६७

य इमं परमं गुह्यं मद्भक्तेष्वभिधास्यति ।
भक्तिं मयि परां कृत्वा मामेवैष्यत्यसंशयः ॥ ६८

नच तस्मान्मनुष्येषु कश्चिन्मे प्रियकृत्तमः ।
भविता नच मे तस्मादन्यः प्रियतरो भुवि ॥ ६९

---

प्रकृतिरीश्वरेच्छा – "प्रकृतिर्वासनेत्येवं तवेच्छानन्त कथ्यते" इतिवचनात् । एषा तु "प्रकृत्यैव च कर्माणि" इत्यादिष्वपि युज्यते । तस्या एव हि मुख्यतो नियोक्तृत्वं स्वभावकर्मादिभिर्बद्ध्वा ॥५९॥६०॥ तदेवाऽह—ईश्वरः सर्वभूतानामिति ।

"निश्चितार्थः स तु ज्ञेयो यत्राऽत्मैव परोक्षतः । उच्यते विष्णुना यद्वत् तद् ब्रह्मेत्यादि कथ्यते" इति शब्दनिर्णये । "मन्मनाः" इत्युपसंहाराच्च ॥६१॥

शाश्वतं स्थानं वैकुण्ठादि –

"श्रीरेव लोकरूपेण विष्णोस्तिष्ठति सर्वदा । अतो हि वैष्णवा लोका नित्यास्ते चेतना अपि" इत्याग्नेये । "न वर्तते यत्र रजस्तमस्तयोः सत्त्वं च" इत्याद्युक्तं ॥६२॥६३॥

तत्त्वसारकथनं "द्वाविमौ पुरुषौ" इत्यत्रैवोपसंहृतम् । तत्त्वप्रशंसार्थमेव तद्बुद्धिप्रशंसा कृता । अत्रतु साधनसारोपसंहारः—सर्वगुह्यतममिति । "मन्मनाः" इत्यादेः पूर्वमेवोक्तत्वात् भूय इति । अर्थतस्त्वत्रापि विष्ण्वाधिक्यमेवोक्तं भवति ॥६४॥६५॥ अन्यसर्वधर्मान् परित्यज्येत्युक्तशेषत्वेन सर्वधर्मानिति वचनम् । "मामेकं शरणं व्रज" इत्यपि "मन्मनाः" इत्याद्युक्तनिगमनात्मना तद्व्याख्यानम् ।

"सर्वोत्तमत्वविज्ञानपूर्वं तत्र मनः सदा । सर्वाधिकप्रेमयुक्तं सर्वस्यात्र समर्पणम् । अखण्डा त्रिविधा पूजा तद्रत्यैव स्वभावतः । रक्षतीत्येव विश्वासस्तदीयोऽहमिति स्मृतिः । शरणागतिरेषा स्याद् विष्णौ मोक्षफलप्रदा" इति महाविष्णुपुराणे ।

अनादिजन्मकृतसर्वपापेभ्यः । अत्र प्राप्त्यभावात् । धर्मपरित्यागे पापपरित्यागस्य कैमुत्येनैव सिद्धत्वात् ॥६६॥ अतपस्कायैव न वाच्यम् । अशुश्रूषवे पुनश्चेति दोषाधिक्यमशुश्रूषोर्दर्शयितुं चशब्दः । एवमभक्ताय कदाऽपि न वाच्यम् । कदाचिदल्पतपसोऽल्पशुश्रूषोरपि भक्त्याधिक्ये वाच्यं भवतीति कदाचनेति विशेषः । अभक्ताच्च न वाच्यमसूयोरिति तत्रापि चशब्दः ।

"समुच्चये तथाऽऽधिक्ये न्यूनत्वे चः प्रयुज्यते" इति शब्दनिर्णये । "अभक्तादपि पापः स्यादसूयुर्दोषदृग् यतः" इति च पाद्मे ॥६७॥

"सोऽपि मुक्तः", "नच तस्मान्मनुष्येषु" इत्युक्तेश्च मुक्तानां महत् तारतम्यं ज्ञायते । "मनुष्येषु" इति विशेषणात् तत्रापि देवानामाधिक्यं च ।

अध्येष्यते च य इमं धर्म्यं संवादमावयोः ।
ज्ञानयज्ञेन तेनाहमिष्टः स्यामिति मे मतिः ॥ ७०

श्रद्धावाननसूयश्च शृणुयादपि यो नरः ।
सोऽपि मुक्तः शुभान् लोकान् प्राप्नुयात् पुण्यकर्मणाम् ॥ ७१

कच्चिदेतच्छ्रुतं पार्थ त्वयैकाग्रेण चेतसा ।
कच्चिदज्ञानसम्मोहः प्रनष्टस्ते धनञ्जय ॥ ७२

अर्जुन उवाच

नष्टो मोहः स्मृतिर्लब्धा त्वत्प्रसादान्मयाऽच्युत ।
स्थितोऽस्मि गतसन्देहः करिष्ये वचनं तव ॥ ७३

सञ्जय उवाच

इत्यहं वासुदेवस्य पार्थस्य च महात्मनः ।
संवादमिममश्रौषमद्भुतं रोमहर्षणम् ॥ ७४

व्यासप्रसादाच्छ्रुतवानेतद् गुह्यमहं परम् ।
योगं योगेश्वरात् कृष्णात् साक्षात् कथयतः स्वयम् ॥ ७५

राजन् संस्मृत्य संस्मृत्य संवादमिममद्भुतम् ।
केशवार्जुनयोः पुण्यं हृष्यामि च मुहुर्मुहुः ॥ ७६

तच्च संस्मृत्य संस्मृत्य रूपमत्यद्भुतं हरेः ।
विस्मयो मे महान् राजन् हृष्यामि च पुनःपुनः ॥ ७७

यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः ।
तत्र श्रीर्विजयो भूतिर्ध्रुवा नीतिर्मतिर्मम ॥ ७८

इति श्रीभगवद्गीतायामष्टादशोऽध्यायः

---

"मुक्तिर्ज्ञात्वाऽपि विष्णुं स्याच्छास्त्रं श्रुत्वा ततोऽधिकम् । मुक्तौ सुखं तत् पठतस्ततोऽप्यधिकमिष्यते । व्याख्यातुस्तु समं मुक्तौ सुखं नान्यस्य कस्यचित् । ततोऽधिकं तु देवानां मुख्यव्याख्याकृतो यतः" इति च ॥६८—७२॥

" यथेच्छसि तथा कुरु " इत्याक्षेपपरिहाराय " करिष्ये वचनं तव " इत्यनुसरति भगवन्तम् । ॥७३-७८॥

नमस्ते वासुदेवाय प्रेयसां मे प्रियोत्तम ।
समस्तगुणसम्पूर्ण निर्दोषानन्ददायिने ॥

यस्य त्रीण्युदितानि वेदवचने रूपाणि दिव्यान्यलं
बट् तद्दर्शतमित्थमेव निहितं देवस्य भर्गो महत् ।
वायो रामवचोनयं प्रथमकं पृक्षो द्वितीयं वपु-
र्मध्वो यत्तु तृतीयमेतदमुना ग्रन्थः कृतः केशवे ॥

निःशेषदोषरहित कल्याणाखिलसद्गुण ।
भूतिस्वयम्भुशर्वादिवन्द्यं त्वां नौमि मे प्रियम् ॥

इति श्रीमदानन्दतीर्थभगवत्पादविरचिते
श्रीभगवद्गीतातात्पर्यनिर्णये
अष्टादशोऽध्यायः

समाप्तोऽयं तात्पर्यनिर्णयः

इति श्रीभगवद्गीताप्रस्थानम्

*

# परिशिष्टम्



## गीताभाष्यतात्पर्ययोः प्राचीनपाठः

[गीताभाष्यगीतातात्पर्ययोः प्राचीनकोशेषु श्रीहृषीकेशतीर्थादिभिर्निबद्धलिपिषु परिदृश्यमानः प्रतनः पाठोऽत्र मुद्रितः। तत्र प्रचलिताः पाठाः पूर्वत्र ग्रन्थे मुद्रिताः। ततः परमुपनिषत्प्रस्थानसूत्रप्रस्थानयोः प्राचीनपाठ एव ग्रन्थे मुद्रितः, पाठान्तराणि च टिप्पन्यां परिदर्शितानीत्यवगन्तव्यम्। यद्यपि हृषीकेशतीर्थीये गीताभाष्यं नोपलभ्यते। तेन चात्र साक्षादाचार्यपाठपरम्परा दुःसम्पादा। तथापीतरप्रतनतरपाठावलम्बेन यथासम्भवं यथोपलब्धि च प्राचीनपाठनिर्णयोऽत्राक्रियत। तत्सम्बद्धं च टिप्पन्यादिकमत्र संयोजितमिति विभावनीयम्।]

| पृष्ठम् | पङ्क्तिः | प्राचीनपाठः |
|---|---|---|
| १ | १२ | 'भारतं सारः' |
| | १४ | 'देवैर्ब्रह्मादिभिः सर्वैरत्यरिच्यत भारतम्' |
| | १५ | 'नारायणो देवः' |
| | १७ | 'इत्यादि ब्रह्माण्डे' |
| | २० | 'परमधर्मः' |
| २ | २ | 'संसारक्लेशिनम्' |
| | १० | 'स्वनुष्ठितात्। सर्वगुह्यतमम्' |
| | १४ | 'स्वधर्मेण भगवद्दा' |
| | २० | 'पूर्वतरं कृतम्' |
| | २२ | 'दृढमिति। दैवी—' |
| | २५ | 'मव्ययम्। दर्शयामास पार्थाय' |
| | ३२ | 'नाशयाम्यात्मभावस्थः। तेषामहम्—' |
| ३ | १ | 'सर्वोऽपि जानते' |
| | ८ | 'ह्यास्तीकादि' |
| | १४ | 'प्रळयस्तथा' |
| | ३० | 'सर्वस्य भगवदधीनत्वम्' |
| | ३०–३१ | 'सर्वगुणपरिपूर्णत्वम्' |
| ४ | २ | 'पुराणान्तरगतवाक्यान्यथा-' |
| | १० | 'सान्द्रानन्दस्वरूपैव' |
| | २० | 'समाचिन्तयत्' |

| पृष्ठम् | पङ्क्तिः | प्राचीनपाठः |
|---|---|---|
| | २३–२४ | 'महत् तात्पर्यम्' |
| | २५ | 'ततोऽतः। परो मात्रया-' |
| | २७ | 'स्वत एव वा' |
| | २९ | 'तस्मात् कुर्वेव कर्माणी—' |
| | ३१ | 'इत्यादि च वाह्य' |
| ५ | २५ | 'इत्यादेः' |
| ७ | २६ | 'पौत्राः स्यालाः' (स्यते रूपमिति निरुक्तादिषु निर्वचनात् स्याल इति भवति) |
| १० | १९ | 'ईश्वरानित्यत्वस्याप्रस्तुत—' |
| | २१ | '—विरुद्धं वदसि' |
| ११ | ८ | 'भेदे देही' |
| | ८ | 'बौद्धादिवत्' |
| | ११ | 'सिद्धिरप्रमाणकस्येति' |
| | १४ | 'स्ववाक्येन सिद्ध्यति' |
| | १५ | 'नच केनचिदपौरु—' |
| | १७ | 'न जीवनाशम्' |
| | २२ | 'त एव हि शीतोष्ण—' |
| | २३ | 'स्वतः सुखदुःखादि सम्भवति' |
| | २५ | '—विगमनामजन्म—' |
| | २७–२८ | 'नत्वेवाहं जातु नासमिति। यद्यप्येषा' |
| | २८ | 'प्राप्तं लोकोपकारार्थम्' |

| पृष्ठम् | पङ्क्तिः | प्राचीनपाठः |
|---|---|---|
| १२ | २ | 'विषयविषयिसम्बन्धादन्यः' |
| | ,, | 'प्रवाहरूपत्वेनापि नित्यत्व—' |
| | ४ | 'अत आत्मनो देहा—' |
| | १३ | 'तत् किमिति ? आह' |
| | २१ | 'अभावोऽपि नास्तीति' |
| | २७ | 'पदार्थमुत्पत्तेः' |
| | ,, | 'नास्तीति हि सर्वे—' |
| | २८ | 'किञ्चित् प्रमाणम्' |
| | ३२ | 'इति च ब्रह्मतर्के' |
| १३ | ८–९ | 'नैमित्तिक इत्याह' |
| | १३ | 'किञ्चिदस्तीत्यत्र मानम्' |
| | १५ | 'तत्ख्यातिनिवारणम्' |
| | १८ | '—प्यभ्रान्तसदिदमित्य—' |
| | २०–२१ | 'विश्वं सत्यं मघवाना युवोरिदापश्चन प्रमिनन्ति व्रतं वाम्। यच्चिकेत सत्यमित् तन्नमोघं वसु स्पार्हमुत जेतोत दाता। कविर्मनीषी—' |
| | २५ | 'महावराहे' |
| | २७ | 'देहहान्यादिना नाशो विद्यत एव' |
| | ३१ | 'येन ततम्' |
| १४ | १ | 'न यत्र माया' |
| | ४ | 'प्रवाळवैडूर्यमृणाळवर्चसाम्' |
| | ७ | 'बहिरेव वेति' |
| | ९ | 'प्रळये' |
| | १६–१७ | 'रममाणः स्त्रीभिर्वा यानैर्वा। तदा विद्वान्' |
| | १९ | 'मानुषगन्धर्वा देवाः' |
| | ,, | 'कर्मदेवास्तत्स्वरूपाः' |
| | २३–२४ | 'मनोजवेष्वसमा बभूवुः। आदघ्नास उपकक्षास उ त्वे ह्रदा इव स्नात्वा उ त्वे ददृश्रे। कामस्य यत्रा—' |
| | २४–२५ | 'माममृतं कृधीन्द्रायेन्दो परि स्रवेत्यादि' |

| पृष्ठम् | पङ्क्तिः | प्राचीनपाठः |
|---|---|---|
| १४ | २९ | 'इत्यादिवाक्यविरोधः' |
| १५ | १ | 'कुतस्तत् स्यात्' |
| | ३–४ | 'प्रधानपुरुषाद्यन्यत्' |
| | ८ | 'कापि हि ब्रह्मवैभवम्' |
| | २० | 'सदृशत्वाद् वा' |
| | २६ | 'तदीयस्त्वमपि' |
| १६ | ५ | 'प्रकृष्टो भेदपञ्चकः' |
| | ८ | 'नैवान्यस्य कुतश्चन' |
| | ११ | '—नामधेयेतिशब्दादीनां वैयर्थ्याच्चान्यथा' |
| | १८ | 'नासंवत्सरवासिने नाप्रवक्त्रे' |
| | २४ | 'स्याच्च। उपाधि—' |
| | ,, | 'पुनर्निषेध्य इति' |
| | २६ | '—गतं दुःखं प्रति प्रति भुज्येतेत्येवमा—' |
| | ३१ | 'इति सिद्धमेव' |
| १७ | २० | 'जीवरूपम्' |
| | २७ | 'इत्यादि परमश्रुतिः' |
| १८ | १३–१४ | 'स्थाणुत्वेऽपि ऐक्षत' |
| | २० | 'तत्प्रसादादवाप्नोषि' |
| | २१–२२ | 'निर्व्यळीकम्' |
| | २२ | 'येषां ममाहमिति न श्वसृ—' |
| | २३ | 'किमिहास्त्यलभ्यम्। ऋते—' |
| | २४ | 'आत्मन् लभन्ते। ऋते भवत्—' |
| | २५ | 'अत्राप्यङ्गीकार्यम्' |
| | २९ | 'जीवस्यापि सममित्याह' |
| १९ | ४ | 'को ह्यन्य इत्यादि' |
| | ७ | 'न त्वत्समोऽस्ति इत्यादिषु' |
| | ९ | 'सतामसि। विश्वस्मा—' |
| | १३ | 'प्रळयजवारि—' |
| | २० | 'इत्यादिवचनात्' |
| | २२ | 'सर्वागममहातात्पर्यम्' |
| | २३–२४ | 'मानोक्तावदोषत्वं च' |
| | २६ | 'कर्म चेत्यादौ' |
| | ३२ | 'पुनरुक्तं चान्यथा' |

| पृष्ठम् | पङ्क्तिः | प्राचीनपाठः |
|---|---|---|
| २० | १ | 'क्रतुर्विद्या' (प्राचीनकोशेषु क्रतुरित्येव पठ्यते । उपरि तु 'तनुर्विद्या' इति वक्ष्यति ।) |
| | २ | 'ऐश्वर्यवाचि' |
| | ३ | 'स्वरूपत्वान्न' |
| | १३ | 'अचिन्त्योऽयमित्यादि' |
| | २३ | 'कथं कं घातयति' |
| | २६ | 'ईश्वरोऽहं मोहाय मृषैव दर्शयामि' |
| २१ | ४ | 'अथेति' |
| | ११ | 'अयुक्तं युक्तमपि हि' |
| | २१ | 'मूलरूपे च' |
| | २९ | 'ध्रुव इति महावराहे' |
| | ३० | 'ननु नियमेन' |
| | ३१ | 'सदातनं चोक्तम्' |
| २२ | २२ | 'सागरं सागरोपमम्' |
| | २३ | 'नैतादृशं कश्चित्' |
| | २५ | 'सर्वस्य देहे' |
| २३ | १ | 'अथ चेत् त्वं धर्म्यमिमम्' |
| | २० | 'साङ्ख्ययोगशब्दार्थ उपादेयो वर्णनीयः' |
| | २२ | 'स्वर्गो मही च' |
| | ,, | 'शूरासो ये तनुत्यजः इति श्रुतेः' |
| २४ | ९ | 'अनर्थहेतुत्वस्याङ्गीकृतत्वात्' |
| | २१ | 'स्वर्गे भुक्त्वा' |
| २५ | ७ | 'कर्मवाचकवेदरताः' |
| | ८-९ | 'मां विधत्तेऽभिधत्त इत्यादिभिः पारोक्ष्येण हि प्रायः' |
| | ९ | 'गतिं तत्प्राप्तिं प्रति' |
| | १३-१४ | 'गृहमेधसौख्यम्' |
| | २० | 'भोगैश्वर्यादिगत्यर्थक्रिया-' |
| | २१ | 'पातनीम्' |
| | २३ | 'पृष्ठे ते सुकृतेऽनुभूत्वा' |
| | ,, | 'चाऽथर्वणी श्रुतिः' |
| | २४ | 'इति च भागवते' |
| | २५ | 'याथार्थ्येन ससंशयाः' |
| | २८ | 'विशेष एष तेषाम्' |
| | २९ | 'त आचार्याणाम्' |
| | ३१ | 'नारायणीये' |
| २६ | ४ | 'अर्थ इव भवति' |
| | ९ | 'सर्वे वेदाः । वेदोऽखि-' |
| | १० | 'आत्मनस्तुष्टिरेवच' |
| | ११ | 'धर्माधमत्वोक्तेः।' |
| | १६ | 'विजानतो ज्ञानिनो ब्राह्मणस्य' |
| | २० | 'इति । सत्त्वः साधु-' |
| | २१ | 'सन्तविष्णुस्मरणान्नित्य-' |
| | २३ | 'प्रळये' |
| | २४ | ,, |
| | २५ | 'साधकस्य तु' |
| | २७ | 'ज्ञानप्रसन्नश्च' |
| | २९ | 'प्रळयकाले' |
| | ३१ | 'प्रळये' |
| २७ | ७ | 'नहि फलानि' |
| | ८ | 'विपर्ययप्रय-' |
| | ११ | 'इत्यादौ भागवते' |
| | १५ | 'अन्यथा फलाभावेऽपि' |
| | १८ | 'भक्तिमन्विच्छतः' |
| | ,, | 'विज्ञाय प्रज्ञां कुर्वीत, द्रष्टव्यः' |
| | २० | 'लौकिकन्यायाच्च' |
| | २३ | 'योगस्थ इति । उपायस्थः' |
| | २६ | 'सलिलमासीत्' |
| | २७ | 'इत्यादिश्रुतिभ्यश्च ।' |
| | ३२ | 'इति हि पैङ्गिश्रुतिः' |
| २८ | ७ | 'मानुष्यादि जहाति' |
| | ९ | 'न तस्य' |
| | १० | '-श्रुतिभ्यः' |
| | १४ | 'भवन्ति' |
| | ,, | 'स्त्रीभिर्वा यानैर्वा अस्मा' |
| | २१ | 'ज्ञानमपाश्रित्य' |
| | २३ | 'बिम्बैक्यं पश्यामः' |

| पृष्ठम् | पङ्क्तिः | प्राचीनपाठः |
|---|---|---|
| २८ | २५ | 'नित्यताभिधानाच्च' |
| २९ | ३ | 'यथोदकम्, यथा नद्यः' |
| | ७ | 'अतो नान्यत्' |
| | १० | 'नित्योपाधिनिर्मिता-' |
| | ,, | 'कलयैव तु' |
| | ११ | 'नारायणरामकल्पे' |
| | ,, | 'लौकिकवैलक्षण्ये' |
| | १२ | 'तथाहि-अशारी-' |
| | १३ | 'नोपजायन्त इत्यादिवचनात्' |
| | १४ | 'अनिष्यन्दाः' |
| | १७ | 'तदन्यस्य मुक्तिनिषेधात्' (अस्मिन् पाठे मुक्तिनिषेधादिति मुक्तित्वनिषेधादित्यर्थः। श्वेतगमनरहितस्य मुक्तिनिषेधादिति च) |
| | ,, | 'तत्र यान्ति' |
| | २० | 'अतोऽनिष्टस्यैव वियोगः' |
| | २१ | 'इत्यादिभ्यः। विशेष-' |
| | २५ | 'परब्रह्म जनार्दन' |
| ३० | ९ | '—लुळितात्' |
| | ११ | 'एकत्वमित्युत' |
| | १२ | 'स एव भवति' |
| | १४ | 'मुक्तिविशेषोऽस्ति' |
| | २० | 'इतरप्रयोगे' |
| | २४ | 'सती यदा वेदार्था-' |
| | २५ | 'समाधावचला ब्रह्मप्र-' |
| | २८ | '-श्रुतिसाफल्यम्' (अस्मिन् पाठे श्रुतिः श्रवणम्। कृतं श्रवणं श्रुतमिति यावत्) |
| | ३० | 'इति पैङ्गिश्रुतौ' |
| ३१ | ४ | 'प्रज्ञा यस्य' |
| | ९ | 'तथैव हि' |
| | १४ | 'दर्शयिष्यन् लक्षणम्' |
| | १५ | 'किमर्थं प्रवृत्तिम्' |
| | १६ | 'अल्पाभिसन्धिप्रवृत्तयः' |

| पृष्ठम् | पङ्क्तिः | प्राचीनपाठः |
|---|---|---|
| | १९–२० | 'विलक्षणाः। अत एव वैलक्षण्यादनाधिकारिकाणाम्' |
| | २७ | 'अनिषिद्धकामतैवातो ह्यकामत्वमि' |
| | २९–३० | 'कादाचित्काऽपि' |
| | ३१ | 'भवेत वा' |
| ३२ | ४ | 'नान्यथा तु कदाचन' |
| | ९ | 'उत्तरैस्त्रिभिः श्लोकैः' |
| | ११ | 'इत्यभिधाने' |
| | १९ | 'उत्तरश्लोकैः' |
| | २२ | 'रस्ये च' |
| | २४ | वाचकत्वाच्च' |
| ३३ | ४ | 'मयि मनो युक्त्वा' |
| | १० | 'सम्मोहसञ्ज्ञितम्' |
| | ११ | 'स्मृतिनाशः' |
| | ,, | 'बुद्धिनाशः' |
| | १७ | 'विधेय आत्मा मनो यस्य।' |
| | २५ | 'दोषमाहोत्तरश्लोकाभ्याम्।' |
| | २८ | 'ज्ञातोऽप्यन्यथा स्मर्यते वाक्यार्थः। वाक्यार्थानाम्–' |
| | ,, | 'निर्णीतज्ञानमपि' |
| ३४ | ११ | 'उक्तलक्षणम्' |
| | १४ | 'देहं तु देहोऽपीति श्लोकाभ्याम्' |
| | २२ | 'मुक्तिमाप्नोतीत्यर्थः' |
| | २३ | 'मन्निष्ठता बुद्धेरिति हि भागवते' |
| | २६ | 'सूर्यवदेव तु' |
| | २८ | 'समुच्यते' |
| ३५ | ११ | 'कर्माणि। सत—' |
| | १३ | 'रुद्रपदम्' |
| | १९ | 'इति निन्दनात्' |
| | २२ | 'तथाह्युक्तम्–त्वं च रुद्र महाबाहो मोहशास्त्राणि कारय। अतथ्यानि वितथ्यानि दर्शयस्व महाभुजेति वाराहे' |
| | २६ | 'चक्षुर्वेदैस्तु' |

| पृष्ठम् | पङ्क्तिः | प्राचीनपाठः |
|---|---|---|
| ३६ | ३ | 'तस्मिन् क्षणे' |
| | ८ | 'बहुजन्मविपक्वेन' |
| | १२ | 'उपपद्येत' |
| | १३ | 'शब्द्यत इति भागवते। भगवन्तं परं ब्रह्म। परं ब्रह्म जनार्दन' |
| | १४ | 'यस्मात् क्षरमतीतोऽहम्। योऽसावती—' |
| | १६ | 'कुतोऽन्य इत्यादिभ्यः' |
| | १८ | 'सुवर्णज्योतीः' |
| | ,, | 'अन्तराकाशः' |
| | १९ | 'कथं च दहरत्वम्?' |
| | २१ | 'तमसः। सर्वतः—' |
| | ,, | 'विश्वतश्चक्षुरुतेत्यादि' |
| | २३ | 'पराऽस्य शक्तिः। यः—' |
| | २५ | 'कान्तिकान्तः' |
| | २९ | 'इत्यादिभ्यो ब्राह्मे।' |
| | ३० | 'तानि च सर्वाणि' |
| | ३२ | 'स मा भग। न तस्य—' |
| ३७ | १ | 'परमाक्षर इति पैङ्गिखिले' |
| | ३ | 'इत्यादिभ्यो ब्रह्मवैवर्ते' |
| | १२ | 'संसारधर्माः' |
| | १४ | 'ऋषयोऽपि तु' |
| | १५ | 'वदन्त्येव ह्यभक्तानां विमोहने' |
| ३८ | १० | 'मता तत् तर्हि' |
| | १९ | 'प्रियव्रतादयो ज्ञानिन एव' |
| ३९ | ३ | 'नैष्कर्म्यं निष्कर्मतया' |
| | ७ | 'सर्वाणि भुक्तानि' |
| | ९ | '–फलकर्माणीत्यसमाप्तिः' |
| | १२–१३ | 'इति च। यदि च सादिः' |
| | १५ | 'निवृत्तमिह चोच्यते' |
| | १८ | 'न्यासमिति वक्ष्यमाण—' |
| | ,, | 'अन्तःकरणशुद्ध्या' |
| | १९ | 'ज्ञानमुक्तम्' |
| | २० | 'गृहमेधसौख्यम्' |
| | २३ | 'भगवत्तोषार्थश्च' |
| | २६ | 'भगवतस्तोषः' |
| | २७–२८ | 'हरितोषणः' |
| ४० | ७ | 'न्यासादिविधानात्' |
| | १६ | 'एतान्यपितु इति च' |
| | ,, | 'याजुका स्यात्' |
| ४१ | ३ | 'विवक्षायां चक्र—' |
| | ४ | 'सामान्यमात्रेणेदानीम्' |
| | ७ | 'इति स्मृतेश्च।' |
| | १४ | 'कर्म चेत्यादेश्च' |
| | १६ | 'तेभ्यो ह्यभिव्यज्यते' |
| | २८ | 'वित्तदानं च' |
| ४२ | २ | 'इत्यादिरूपप्रपञ्चसहाभि—' |
| | ३ | 'अस्वातन्त्र्येण कर्तुः' |
| | ७–८ | 'जन्माद्यस्य यत इत्युक्ते' |
| | २१ | 'सर्वात्मनाऽलम्बुद्धिं च' |
| | २४ | 'प्रयोगसिद्धम्' |
| | २८ | 'तृप्तिस्तत् कृतकृत्यता' |
| | ३० | 'इत्यभिधाने' |
| ४३ | ४ | 'कालावच्छेदविषयः प्रसिद्धः' |
| | १० | 'समो वाऽर्थो नास्ति' |
| | ११ | 'दोषः। नचैदप—' |
| | २१ | 'प्राप्य वा' |
| | २१–२२ | 'तमेवं विद्वानित्यादि' |
| | २४ | 'किञ्चिदत्र हि' |
| | २८ | 'कार्यं कर्माऽश्रमोचितम्' |
| | २९ | 'अद्धा वा तुष्टिदम्' |
| ४४ | ४ | 'उक्तज्ञाननियमम्' |
| ४५ | ६ | 'इन्द्रियाद्यभिमानाद्धि विषयादि—' |
| | १३ | 'तदधीनस्वतन्त्रत्वम्' |
| | १५ | 'कर्तृत्वं विभागेन' |
| | २० | 'पूर्त्यभावे तु सर्वेषाम्' |
| | २१ | 'नित्यकालं हरीच्छया' |
| | २३ | 'कर्म सर्वैस्तैः' |
| | २९ | 'सभारूपेण' |
| | ३० | 'पृष्टोऽव्यक्तिकृदेव वा' |
| ४६ | ३ | 'भ्रान्तितो जीवे' |

| पृष्ठम् | पङ्क्तिः | प्राचीनपाठः |
|---|---|---|
| | १५ | 'नियमोऽपि निराकृतः' |
| | १८ | 'नानुतिष्ठति लोक इत्यतः' |
| | २७ | 'युद्धकर्मेत्यतः' |
| ४७ | १६ | 'अन्येषामदर्शनाय' |
| | १८ | 'कामेन जीवः' |
| | २४ | 'यद्यपीन्द्रादिपदं प्राप्तम्' |
| | २५–२६ | 'गर्भोल्पोऽपि हि' |
| | ३०–३१ | 'ज्ञानेऽस्त्रैणैव हन्यते' |
| ४८ | १५ | 'इति हि श्रुतिः' |
| ४९ | १२ | 'महानात्मा वरस्ततः' |
| | १७ | 'नचेतरत्' |
| | २८ | 'तेषामेव च वार्ष्णेयः सेनामध्ये' |
| | २८–२९ | 'सङ्क्षेपेणायुयुत्सते' |
| ५० | १९ | 'विमोहिकयाऽजात एव जात इव प्रतीयते वा' |
| | २४ | 'पृच्छसि पाण्डव' |
| | २७ | 'इत्यादिश्रुतेः ।' |
| | २७–२८ | 'मयाऽध्यक्षेणेत्यादिषु' |
| | २९–३० | 'सम्बन्ध्याशङ्कां निवर्तयति' |
| ५१ | ८ | 'परित्राणादि कार्यमिति' |
| | ११ | 'चेष्टामस्य' |
| | ३० | 'वेदेषु वेतिहासेषु' |
| ५२ | ६ | 'भगवांश्च' |
| | १४ | 'सात्त्विको हि ब्राह्मणः' |
| | १६ | 'क्रियाया वैलक्षण्यात्' |
| | १७ | 'क्रियाऽऽकृतिरित्यादि च' |
| | २० | 'अत एव न माम्' |
| | ,, | 'कर्मफले स्पृहा ।' |
| | २६ | 'फलप्रदानरूपेण' |
| | २८–२९ | 'भजे हरिम्' |
| ५३ | ६ | 'ज्ञात्वा कर्मकरणे' |
| | ९ | 'दुर्ज्ञेयत्वमाह' |
| | १५ | 'निषिद्धम् । बन्धकत्वात्' |
| | २३ | 'कृत्स्नफलत्वात्' |
| | २६ | 'विष्णुभक्तिस्त्वनुगता' |
| | ३१ | 'सर्वकर्मकर्तृत्वम्' |

| पृष्ठम् | पङ्क्तिः | प्राचीनपाठः |
|---|---|---|
| ५४ | ७ | 'सरूपोऽस्मीति' |
| | १४ | 'द्वन्द्वातीतत्वमिति ? आह' |
| | २५ | 'क्रियावाची वा । प्रसिद्धश्च' |
| | २६ | 'कृत्स्नफलवत्त्वात्' |
| | २७ | 'अनिराश्रयः भगवदाश्रयः ।' |
| | २८ | 'ब्रह्मण्यर्पणम् । ब्रह्मणो हविः' |
| | २९ | 'तदधीनेत्यर्थः' |
| ५५ | १० | 'यज्ञं प्रति यज्ञेन जुह्वतीति' |
| | १३ | 'इति' |
| | २३ | 'कुम्भकस्थान एव' |
| | २८ | 'तत्पूजात्वेनैवेन्द्रियादिसर्वसंयमम्' |
| ५६ | ३ | 'यच्छेद् वाङ्मनसी इत्यादि' |
| | ८ | 'सर्वयज्ञानामिति हि' |
| | २७ | 'शङ्कां वारयति' |
| | २८ | 'परं ब्रह्म' |
| | ३१ | 'योगमातिष्ठेत्यादिपुनर्योग—' |
| ५७ | १५ | 'तृतीयोक्तमेव' |
| | ,, | 'इत्यादि सन्न्यासम्' |
| | १६ | 'इत्यादि कर्मयोगं च' |
| ५७-५८-२०-१ | | 'कृष्णः । यतः—' |
| ५७ | २१ | 'इत्यादि वक्ष्यमाणत्वात्' |
| ५८ | ३ | 'अयं प्रश्नाशयः' |
| | २७ | 'तयोर्मध्ये च योग एव' |
| | २८ | 'वर्जनमेव न्यास–' |
| | ३०–३१ | 'कुरुषु पाण्डववत्' |
| ५९ | १ | 'अग्निमुग्धो हैव' |
| | २ | 'धूम्रवर्त्मनाम्' |
| | ११ | 'अन्यत् तत्फलमल्पत्वाद –' |
| | १३ | 'विना मोक्षम्' |
| | १५ | 'तथाचोक्तम्' |
| | २० | 'कर्ममार्गे वा' |
| | २१ | 'ज्ञानिना कर्माण्यनु –' |
| | ,, | 'गृहस्थादीनां ज्ञातव्यः' |
| | ३१ | 'केवलः कर्मत्यागः' |
| | ३२ | 'तं विद्धीति' |

| पृष्ठम् | पङ्क्तिः | प्राचीनपाठः |
|---|---|---|
| ६० | २ | 'आत्मभूतः स्वसमीपम्' |
| | ,, | 'यस्य सर्वे—' |
| | १० | 'नियमोपचारत्व—' |
| | १७ | 'युक्त्ययुक्तिफलमाह' |
| | २० | 'मुख्यो योगः' |
| | २४ | 'वर्तन्तेऽन्ये न स्वतन्त्राः' |
| | २५ | 'तत्त्ववित् ॥' |
| ६१ | ७ | 'पित्रा दत्तम्' |
| | १०–११ | 'निवसतामप्याधिपत्या—' |
| | १२ | 'चेति स्वभावः' |
| | १७ | 'वर्षम्। पराऽस्य' |
| | २२ | 'इत्यादिशब्दानामपि' |
| | २४ | 'इत्यत्र मानम्। स्वप्रकाशत्वं च' |
| | २६ | 'प्रमाणगोचरम्। तत्प्रमाणाभावे परप्रका—' |
| | २७ | 'प्रमाभावादप्रका—' |
| | ,, | 'सिद्धिरप्यर्थापत्तितः' |
| | २८ | 'शब्देन स्वमितत्वानङ्गी—' |
| | २९ | 'किञ्चित् प्राकाश्यम्' |
| | ३० | '—दोषत्वादुपरम्यते' |
| ६३ | ४ | 'सोढुं सुकरम्' |
| | ६ | 'उत्तरश्लोकैः' |
| | १० | 'कामादिक्षयव्यक्त—' |
| | २२ | 'एवाऽयतात्मानः छिन्नद्वैधायतात्मानः। दीर्घमनसः' |
| | २३ | 'क्षीणपापा महज्ज्ञात्वा' |
| | २६ | 'सुलभं तेषाम्' |
| ६४ | ४–५ | 'इत्यर्थः। नासाग्रे' |
| | ५ | 'चक्षुर्निपातयेत्' |
| ६५ | ७ | 'कर्तव्यमिति ? आह' |
| | १२ | 'सम्यक् तु समाधिः' |
| | १७ | 'योगारूढलक्षणमाह' |
| | २४ | 'कर्मेति करवन्मितेः' |
| ६६ | ११ | 'यस्य भृत्यपदे न वर्तते' |
| | २३ | 'कूटमाकाशम्' |
| | ३० | 'वाक्यशेषाच्च।' |
| ६७ | ६–७ | 'नियमाद्धरेरेव' |
| | ७–८ | 'मानुषाणाम्' |
| | ९ | 'पूजासाम्यम्' |
| | १२ | 'गरीयो यद्यदुत्तरम्' |
| | १४ | 'इति ब्रह्मतर्के' |
| | १५ | 'साऽपि समता' |
| | १६ | 'पूजादिं सम—' |
| | १८ | 'क्लेशस्थानं निरूप्य निरूप्य यो रक्षाम्' |
| | १९ | 'अरिर्वेधादिकृत्' |
| | २१ | 'कारी तु मध्यगः' |
| ६८ | २४ | 'आत्मनः भगवद्विषयम्' |
| ६९ | ७ | 'एव तद्भूषुणेत्यर्थः' |
| | १४ | 'बुद्धेः कणत्वम्' |
| ७० | ६–७ | 'योगक्षेमवहोऽप्यहम्' |
| | १३ | 'कृतं स्वल्पं पापं भस्मी— |
| | २७ | 'मनसश्चञ्चलत्वात्' |
| | २८ | 'शक्या तु वैराग्याद् वा' |
| ७२ | ५ | 'ध्यात्वाऽथ दृष्ट्वा च जन्म' |
| | २३ | 'ध्यायेदन्यदेवताः' |
| | २४–२५ | 'सुशुद्धधीरिति च दत्ता— |
| ७४ | ४ | 'इति श्रुतेः' |
| | ६ | 'चेति ह' |
| | ८ | 'आभ्यामिदम्' |
| | १२ | 'सर्वकर्मा सर्वकामः' |
| | १५ | 'परतमो मतः' |
| ७५ | ३ | 'स्वभावानां रसानां च' |
| | ४ | 'स्वभावत्वे रसत्वे च' |
| | ५ | 'इत्यादिशब्दैः। ' |
| | ,, | 'रसादेरिति च। उपास—' |
| | ९ | 'पार्षदा एव ध्येयः सः' |
| | १० | 'किमतः परम्' |
| | ११ | 'धर्मविरुद्धः कामोऽसावुपास्यः |
| | १२ | 'बलमिच्छताम्' |
| | १३–१४ | 'तथाहि श्रुतिः' |

| पृष्ठम् | पङ्क्तिः | प्राचीनपाठः |
|---|---|---|
| | १५–१६ | 'पुण्यमेवामुं गच्छति । ऋतम्—' |
| | १७ | 'स्यात् सम्प्रयोगगः' |
| | १८ | 'इत्यादि विरोधि' |
| | २२ | 'इतीश्वरनिवृत्त्यर्थः' |
| | ३१–३२ | 'तपस्विसंस्थस्तपति' |
| ७६ | १४ | 'इत्यादौ व्यासयोगे' |
| | १९ | 'गुणेभ्यः परमिति' |
| | २१ | 'बलकामविवर्जितः' |
| | ,, | 'अराजसबलश्चैव' |
| | २७ | 'अन्यायत्ता चेतना या' |
| | २८ | 'मायां तु तरन्ति हि' |
| ७७ | ५ | '—स्तुतिगतिषु' |
| | २२ | 'मायया चाभिभूयते' |
| ७८ | २८ | 'इत्यादि वाक्यशेषे' |
| ७९ | ७ | 'तच्चाब्रवीत्' |
| | ८ | 'विमोहिता इति ।' |
| | १२–१३ | 'तच्चाऽह–आत्मनः प्रवृत्तिं चैव' |
| ८० | ८ | 'गुणलिङ्गानामानुश्रविक–' |
| | २१ | 'महामोहस्तामिस्रः क्रोध उच्यते' |
| | २५ | '—त्वाशङ्कां निवारयति—साधिभूताधिदैवं मामिति' |
| ८१ | ११ | 'परमक्षरं ब्रह्म । वेदादिशङ्का-व्यावृत्त्यर्थमेतत्' |
| | १८–१९ | 'अव्यक्तान्तर्भावे तस्याप्यन्य—' |
| | १९–२० | 'मध्ये किञ्चित्' |
| | २१ | 'परमाक्षरं विष्णुरेव' |
| | २३ | 'प्रयुक्तेनाव्यक्तशब्देन' |
| | २५ | 'इत्युक्तादक्षरादपि' |
| ८२ | १ | 'परमे व्योमन्' |
| | ३–४ | 'सर्वदेवानधिकृत्य पतिरित्य–' |
| | ८ | 'ध्रुवं स्वर्गं कुतो नैश्रेयसं परम्' |
| | २४ | 'मद्भावं मद्वद् भावम् । निर्दुःखनिरतिशयानन्दात्मकम्' |
| ८३ | ५ | 'स्मरंस्त्यजतीति' |
| | ८ | 'इति च स्कान्दे' |
| | १० | 'इत्यन्तकालस्मरणो—' |
| | २३ | 'इति हि श्रुतिः । त्वं कविः सर्वे वेदानाम्' |
| | २४ | 'कर्तारम् । धाञ्—' |
| | २५ | 'केवलतत्काल—' |
| | २९ | 'नित्यहरिस्मृतेः' |
| ८४ | २ | 'इत्यादेश्च मोक्षधर्मे' |
| | १० | 'मृतिकालकर्तव्यमाह' |
| | ११ | 'वैराग्यसम्पूर्णानाम्' |
| | १५ | 'पुरुषं विशन्ते तेषाम्' |
| | २४–२५ | 'पद्लृ गतौ' |
| | ३० | 'अप्राकृतदेहम्' |
| ८५ | ७ | 'नहि मूर्ध्नि प्राणस्थितेर्हृदि' |
| | ,, | '—मारभ्य पुनरावृत्तिः' |
| | २६–२७ | 'प्रभवन्ति । प्रळीयन्ते' |
| | २८ | 'अहः श्वासो निमेष' |
| ८६ | २–३ | 'इति हि श्रुतिः' |
| | २० | 'परमं साधनमाह' |
| ८७ | ७ | 'तथाहि नारदीये' |
| | ९ | 'इति युज्येत' |
| | १० | 'इति हि ब्राह्मे' |
| | ११ | 'मासाभिमानिन्योऽयनाभिमानिनी च पृथक्' |
| | १२ | 'परिवृतेन ह' |
| | २३ | 'ज्ञात्वाऽनुष्ठीय' (यद्यपि 'अनुष्ठीय' इति न भवति । किन्तु सर्वत्र प्राचीनकोशेषु तथैव पठ्यते) |
| | २५–२६ | 'सायुज्यं गच्छत्येतौ वै' |
| ८८ | १ | 'सोपाये चानुष्ठीय च' |
| | २१ | 'प्रत्यक्षः । प्रति हि सोऽक्षेष्वक्षवान् स भवति हि य एवम्' |
| ८९ | ४ | 'न रुद्रो नेन्द्रो न देवाः' |

| पृष्ठम् | पङ्क्तिः | प्राचीनपाठः |
|---|---|---|
| ८९ | ८ | ‘—साधनमुक्तम् । तज्ज्ञानाद्यमाह’ |
| | १८-१९ | ‘नह्याकाशस्थितोऽपि वायुः’ |
| | २६ | ‘इति च मोक्षधर्मे । सर्वभूतगुणैर्युक्तं दैवं त्वं ज्ञातु—’ |
| ९० | २ | ‘सृष्टिविलायनेषु’ |
| | ८ | ‘—कर्मण्यत्यन्तशक्तोऽपि’ |
| | ८-९ | ‘लोकमेतत् स्रक्ष्यत्सि पासीति गौतमखिलेषु’ |
| | १९ | ‘कर्ता चाहमेवेत्यर्थः’ |
| | २४ | ‘तर्हि कथं केचित् त्वामव—’ |
| | ,, | ‘गतिरिति ? आह’ |
| ९१ | १ | ‘लोकेऽस्मिन् देहबद्धम्’ |
| | २ | ‘भूतान्तरात्मा विज्ञेयः सगुणः’ |
| | ३ | ‘भूतप्रळय—’ |
| | १३ | ‘भगवद्द्वेषिभिराशितमामुष्मिकम्’ |
| | १६ | ‘क्रूरानित्यादि’ |
| | १८ | ‘नारायणं प्रभुम् । कथम्—’ |
| | १९ | ‘—भक्ती ह यस्य’ |
| | २२ | ‘तत्साम्यमापुरनु—’ |
| | २३ | ‘—ज्ञापनार्थम्, स्वभक्तस्य’ |
| | २५ | ‘—बलादेव च द्वेषिणः’ |
| | २६ | ‘तदप्रस्तुतमुच्येत’ |
| | २७ | ‘इति च वक्ष्यति’ |
| | २९ | ‘गुरुद्वेषिणो गुरुत्वं भवतीत्याद्यनिष्टमापद्येत’ |
| | ३१ | ‘—चिद्देहो विदोषः’ |
| ९२ | २ | ‘—पिता मह्यमित्यारभ्य’ |
| | ५ | ‘युक्तिमन्त्येव च बलवन्ति’ |
| | ६ | ‘वाक्ययोर्लोकानुकूलाननुकूलयोरनुकूलमेव’ |
| | ८ | ‘चित्तानिति । अतो न’ |
| | १७ | ‘बहुधा तस्य’ |
| | १९ | ‘बहवो बहुधा’ |
| | २८ | ‘भगवान् पर इति च’ |

| पृष्ठम् | पङ्क्तिः | प्राचीनपाठः |
|---|---|---|
| ९३ | ७ | ‘सामवेदेषु वासिष्ठ—’ |
| | ८ | ‘पापमुक्तैरिति’ |
| | २० | ‘इति ह्यभिधानम्’ |
| | २६ | ‘प्रळयकाले संहर्तृत्वात् प्रलयः’ |
| | २७ | ‘प्रळय इत्युक्तः’ |
| ९४ | १० | ‘कामः कालेन’ |
| | १५ | ‘इत्याद्यमसत्यमि—’ |
| ९५ | ५ | ‘इति च भारते’ |
| | २० | ‘अबुद्धिपूर्वाद् यो’ |
| | २३ | ‘तर्हि साधुरेव’ |
| ९६ | ६ | ‘देवदेवांशादिष्वेव चैतत्’ |
| | १०-११ | ‘—भक्तिर्वेतरेषाम् । शठमतिरूप—’ |
| | १५ | ‘देवं सततं प्रपन्नः’ |
| | ,, | ‘—भावेन नमाम्यजस्रम्’ |
| | १८ | ‘परे स्वोऽनुभवो वि—’ |
| | २५ | ‘पुन्देहस्थितिः’ |
| | २७ | ‘कर्मभोगान्ततोऽपि वा’ |
| ९७ | ६ | ‘प्रीयमाणाय सन्तोषम्’ |
| | ११ | ‘प्रभव इति चोक्तम्’ |
| | १५ | ‘इति चर्ग्वेदखिलेषु’ |
| | १६ | ‘वाक्यशेषादेव ज्ञायते’ |
| | १९ | ‘आदिश्च सर्वस्येत्य—’ |
| | २६ | ‘परमात्मनिष्ठा’ |
| ९८ | ७ | ‘सर्वे पुराणेषूच्यन्ते’ |
| | ८ | ‘भवति । तच्चोक्तं गौतमखिलेषु’ |
| | ९ | ‘स्वायम्भुवं स्वारोचिषम्’ |
| | १३ | ‘चोभयवाक्या—’ |
| | १७ | ‘मत्त एवाभिजाता इति’ |
| | ३० | ‘शक्तिरेव वेति च’ |
| ९९ | ११-१२ | ‘बृह बृंह वृद्धाविति च पठन्ति’ |
| | २० | ‘विविधभूतयो विभूतयः’ |
| १०० | १ | ‘संसार इति जनार्दनः’ (प्राचीनपाठे संसार इति सप्तमी) |
| | १३ | ‘विषु व्याप्तौ’ |
| | ,, | ‘इति हि पठन्ति’ |

| पृष्ठम् | पङ्क्तिः | प्राचीनपाठः |
|---|---|---|
| | १५ | 'तदिच्छुश्चापि भारत' |
| १०१ | ६ | 'इति च बाभ्रव्य—' |
| | २० | 'निष्परीमाण एषः' |
| १०२ | ६ | 'जगत् सर्वम्' |
| | ८ | 'तथाचाऽग्नेयीशाखायाम्' |
| | ९ | 'वीति तमम् । स वै' |
| | १० | 'यच्च किञ्च जगत्यस्मिन् दृश्यते' |
| | १६ | 'अनन्तग अनन्त' |
| | १८-१९ | 'पेरा श्रीश्च' |
| | २९-३० | 'नानागुणैर्विष्णुर्नाना—' |
| १०३ | ३ | 'विष्ण्वादीनितु तत्स्वरूपाण्येव । अन्यानि तु तेजोंऽशयुक्तानि ।' |
| | ५ | 'अंशयुतान्यजीवाः' |
| | ६ | 'रामः कपिलयज्ञप्रमुखाः' |
| | ७ | 'इति च गौतम' |
| | १० | 'अंशत्वं च तत्राप्यव—' |
| | ११-१२ | 'तत्क्रिया वक्ष्यमाणा दृष्टा' |
| | १७ | 'को हि मुच्येत' |
| | १९ | 'प्रयोजनम् । तावुभौ यदि न स्याताम्' |
| | २५ | 'देवेष्वभ्यधिको ब्रह्मा' |
| | २६ | 'गुणेष्वेवम्' |
| | २६-२७ | 'ज्ञानं यज्ञेषु' |
| | २७ | 'सुदर्शनश्चाऽयुधेषु वेदेष्वृग्वेद एवच' |
| १०४ | २ | 'ध्यानं कर्तुं शक्यम' |
| | १३ | 'इति हि मोक्षधर्मे' |
| | १४ | 'इत्यादि चाभिधानम्' |
| | १५ | 'किं ज्ञातेन' |
| | २४-२५ | 'सर्वतोऽनन्तरूपमित्यादेः, द्रष्टुमिच्छामि—' |
| | २७ | 'विशेषनामा तत्रैव' |
| १०५ | १३ | 'सर्वयज्ञादिभागहरत्वात्' |
| | २१ | 'नित्या एव विशेषाश्च' |
| | २८-२९ | 'भेदाभेदौ च तेनैव' |
| १०६ | ३ | 'सहस्रशब्दोऽनेकवाची' |
| | ६ | 'महातात्पर्याच्च बाहुल्यम्' |
| | १७ | 'नैकत्वं नैव नानात्वम्' |
| | १७-१८ | 'एको मदन्यतोऽन्य—' |
| १०७ | ७ | 'इति चर्ग्वेदे' |
| | ९ | 'यजुर्वेदे च' |
| | १२ | 'इति च बाभ्रव्य—' |
| | १४ | 'एकत्र त्वनन्ता—' |
| | १९ | 'रूपाण्यनन्तानीति चैकत्र' |
| | २० | 'इति ह्यृग्वेदखिलेषु' |
| | २२ | 'इति च । कृष्णस्य' |
| १०८ | ५ | 'सोऽनन्तो नहि' |
| | २२ | 'इति च' |
| | २३ | 'बह्वङ्गत्वं च तेषाम्' |
| | २६ | 'ततं विश्वमित्याह' |
| १०९ | ५ | 'मातापित्रोरन्तरगः' |
| | ५-६ | 'वारुणश्रुतेरेकेन रूपेण' |
| | १०-११ | 'इति हि वारुण—' |
| | १८ | 'पुष्कळाभिः' |
| | २५ | 'बहुदंष्ट्राकराळम्' |
| ११० | ५ | 'दंष्ट्राकराळानि' |
| | १४ | ,, |
| | २५ | 'प्रळये प्रजानाम्' |
| | २६ | 'तस्मिन्नेव मुहूर्ते' |
| | २७ | 'दशनान्तरेषु चूर्णितमपि' |
| १११ | १० | 'विष्णवित्येव सम्बोधना |
| | १८ | 'इति हि पठन्ति' |
| | २० | 'इति हि मोक्षधर्मे' |
| | २१ | 'इति हि भागवते' |
| | २५ | ,, ,, |
| | २६ | 'रूपं हीयते' |
| ११२ | १ | 'सर्वे हि न भविष्यन्ति' |
| | ११ | 'जयद्रथो विशेषेणोक्तः' |
| | २३ | 'जगद्धर्षणाद्धृषीकेशः' |
| | २४ | 'तन्नियन्तृत्वादेः' |
| | २५ | 'विशेषेणेशित्वं च' |
| | २८ | 'निहतान् निहतप्रायान्' |

| पृष्ठम् | पङ्क्तिः | प्राचीनपाठः |
|---|---|---|
| ११३ | १ | 'मोक्षधर्मे सिद्धः' |
| ११४ | २६ | 'एष एव करोति' |
| ११५ | २० | 'इति हि वैहायस—' |
| | २७ | 'द्रष्टुमशक्यः' |
| ११७ | ६ | 'तदुपासनमपि हि मोक्ष—' |
| | १३ | 'वयुनानि वस्ते। तस्यां सुपर्णा वृषणा निषेदतुर्यत्र देवा दधिरे भागधेयमिति च। अहं रुद्रेभिः—' |
| | १४ | 'इत्यारभ्य' |
| | २० | 'जुष्ट ऋषिर्भवति' |
| ११८ | २ | 'इति च भागवते' |
| | १० | 'एष वै विष्णुस्तार—' |
| | १२–१३ | 'पुराण इत्यादि। अरूपत्वादेस्तु गतिरुक्ता। पुरुषभेदश्च' |
| | २२ | 'त्वपलापकत्वादेवातिसाहसि–' |
| ११९ | ५ | 'ये त्वित्यादि।' |
| | ९ | 'इत्यारभ्य' |
| | १६ | 'इति ह्यृग्वेदखिलेषु' |
| | २२ | '—सर्वसमबुद्धिसर्वभूतहित-करत्वादिसुष्ठ्वाचार—' |
| | २६ | 'तावता प्रयासेन' |
| | २७ | '—संयमनाद्यूनभावे' |
| १२० | १३ | 'महत्परत्वम्' |
| | १४–१५ | 'महतः परं ध्रुवं निचाय्य तं मृत्युमुखात् प्रमुच्यत इति। परो हि देवः' |
| | १६ | 'इत्यादौ तु साह्वय—' |
| | २० | 'व्यात्तजडाम्' |
| | २० | 'मासान्महाभूतिम्' |
| | २६ | 'मदुपासकानां न कश्चित्' |
| | २८ | 'इति च मोक्षधर्मे' |
| १२१ | ७ | 'ज्ञानमात्रमेव विशिष्यते' |
| | १० | 'इति तु स्तुतिः' |
| | १३ | 'इति च काषायण—' |
| | १५–१६ | 'त्याग एव चात्रोक्तः' |
| | १६ | 'इत्युच्येत' |
| | ३० | 'त्यागध्यानयुतात्' |
| १२२ | १८ | 'तद्विषयं च धर्म्यम्' |
| | १९ | 'इति ह्यभिधानम्' |
| | २४–२५ | 'भगवति समर्पणरूपेण' |
| | २९ | 'इत्युच्यते बुधैः। नहि' |
| १२३ | १६–१८ | 'इति शब्दनिर्णये ॥१७–१९॥ धर्मसाधनम्—' |
| | २३ | 'शरीरं तत् तत्क्षेत्रम्' |
| १२४ | ३ | 'ब्रह्मसूत्राणि शारीरकम्' |
| | ९ | 'अमानित्वमडम्भित्व—' |
| | १२ | 'ज्ञात्वऽपि त्वात्मनोऽल्प–' |
| | २४ | 'न जीवस्य' |
| | २६ | इति हि भागवते' |
| | २७ | तत्प्राप्तेस्तन्निवारणार्थम्' |
| १२५ | ३ | '–सक्तोऽभिष्वङ्गः। स्नेहः सक्तिः स एवातिसक्तोऽभिष्वङ्ग उच्यते इति ह्यभिधानम्' |
| | ९ | 'शास्त्रज्ञानम्' |
| | १२ | 'ब्रह्मेति च। स च यः' |
| | १७ | 'वक्तव्यम्। सर्वक्षेत्रेष्विति' |
| | २२ | 'इत्येतेनैवानुमतिरनु—' |
| १२६ | १६ | 'कार्याकार्या गुणास्तिस्रो यतस्त्वल्पोद्भवो जनौ' |
| | २१ | 'कश्चिन्नैवं वेत्तुम्' |
| | २७ | 'परमस्यैव' |
| १२७ | ३ | 'इति ह्यभिधानम्' |
| | ६ | 'इति हि भागवते' |
| | १९ | 'विशेषहेतोरेवमुच्यत एव।' |
| | २१ | 'कार्यकरणसम्बन्धम' |
| | ,, | 'निवारणायाऽह' |
| | २२ | 'प्रकृतिस्थो हीत्यनुभवविरोधम्' |
| | २७ | 'भ्रान्तित्वप्रमाणम्' |
| | २८ | 'स्वस्याभ्रान्तत्वे' |
| | २९ | 'स्वभावोऽपि। स्वयम—' |
| | ३१ | 'सिद्ध्यति। सुखदुःखादि-विषयम्' |

| पृष्ठम् | पङ्क्तिः | प्राचीनपाठः |
| --- | --- | --- |
| १२८ | ५ | 'महत्परत्वम्' |
| | १३ | 'स्यादिति च न वाच्यम्' |
| | १५ | 'इति चोक्तम्'—बहवः' |
| | १६–१७ | 'वैशम्पायनः — नैतदिच्छन्ति' |
| | १७–१८ | 'योनिरुच्यते–इति च मोक्षधर्मे' |
| | २२–२३ | '—प्यविद्यात्वमङ्गीकृतम् । तदयुक्त—' |
| | २४ | 'वदतस्तेषामुत्तरम्' |
| | २५–२६ | 'परम एवेत्याह' |
| | २७ | 'उपरो द्रष्टा' |
| १२९ | १ | 'स्वप्नेन्द्रजालादिवत्' |
| | २ | 'माश्चोक्ता द्वितीये' |
| | ६ | 'जीवस्यैतद्धृषयो वदन्ति' |
| | १० | 'भृत्यश्चेति भवति । तथाह्या–' |
| | १२ | 'प्रातिविम्ब्यं च सादृश्यमेव' |
| | २१ | 'साङ्ख्ययोगास्तत्' |
| | २९ | 'मानुषाणामल्पप्रतिभान—' |
| | ३० | 'सम्यगुत्पद्यते चेति' |
| | ३२ | 'विसृता नृषु' |
| १३० | ३ | 'तं श्रुत्वा' |
| | ४ | 'पश्यतीति । अन्यथा' |
| | ८ | 'तदेव मानम' |
| | १७ | 'महद् ब्रह्मा' |
| | १८ | 'शिवः' सोऽहङ्कार इति' |
| | १९ | 'जीवाहङ्कृतिकृत्' |
| | २५–२६ | 'जन्मजयहेतोस्तथा' |
| | २८ | 'त्वेव धृतिर्मता' |
| १३१ | ५ | 'धर्मयुतमाह' |
| | ८ | 'चाकर्तारं पश्यति' |
| | ९ | 'चैवैतत् सोऽतो वा' |
| | ११ | विशेषा इति यस्मात्' |
| | १२ | 'कार्यमन्तगम्' |
| | २५–२६ | 'द्रव्यं कर्म कालश्च स्वभावो जीव एव च । यदनुग्रहतः सन्ति न सन्ति यदुपेक्षयेति च स्वयं प्रकृत्य' |

| पृष्ठम् | पङ्क्तिः | प्राचीनपाठः |
| --- | --- | --- |
| | २७ | 'इति स्कान्दे' |
| | ३० | 'चशब्दाच्चैतेनैवेति' |
| १३२ | ३ | 'तत एव विष्णोर्वि—' |
| | २१ | 'विष्ण्वाश्रयाणां तु' |
| | २५ | '—चाकशीति । शरीर–' |
| १३३ | १७ | 'श्रीर्भूर्दुर्गेति या भिन्ना' |
| | १९ | 'श्रीर्भूमिर्दुर्गा महती तु माया' |
| | ,, | 'जगतो बन्धकी च' |
| | २२ | 'वादिसिद्धत्वादेव' |
| १३४ | ३ | 'तथाच कूर्मपुराणे' |
| | ६ | 'इत्यानभिम्लातश्रुतेः। मात्स्य–' |
| | ७ | 'वाच्याऽपि प्रकृतिरेव' |
| १३५ | २५ | 'सद्गुणप्रदा' |
| १३६ | १२ | 'नचापि काङ्क्षेत्' |
| | २७ | 'तं चैव नित्य— ' |
| १३७ | ६–७ | 'बद्धा वाऽपि तु मुक्ता वा न रमावत् प्रिया हरेः' |
| १३८ | १५ | 'प्रवाळा विषयाः' |
| | १६ | 'तथाहि भाल्लवेय— ' |
| | १७ | 'सत्त्वादयोऽवाचीनमूलम्' |
| | २० | 'गुणालोळ' |
| | ३० | 'प्रवाळसदृशा मताः' |
| १३९ | ७ | 'स्थितिस्तथा' |
| | ९ | 'इति हि भागवते' |
| | १४ | 'इति च मोक्षधर्मे' |
| १४० | ८ | 'जित्वा च मघवन्' |
| | १६ | 'वीणायां गायन्तीति च श्रुतिः' |
| | १९ | 'इति श्रुतेः' |
| | २० | 'उत्क्रामन्तमित्यादि । ' |
| १४१ | १० | 'तथाहि सामवेदे' |
| १४२ | ११ | 'इति ह्यभिधानम्' |
| १४३ | १२ | 'मूर्तं चैवामूर्तं च स्थितं च यच्च सच्च त्यं चेति च' |
| | १३–१४ | 'इति च प्राचीन—' |
| १४४ | १०–११ | 'यास्यसीति तु इति हि साम–' |
| | २१ | 'परेभ्यो नच जायते' |

| पृष्ठम् | पङ्क्तिः | प्राचीनपाठः |
|---|---|---|
| | २३ | 'तत्त्ववादिषु कोपाच्च' |
| | ,, | 'अक्षानुमागमानां च' |
| | २४ | 'यस्मात् तेऽतोऽसुराः' |
| | २५ | 'यजन्तेऽनन्यदेवताः' |
| | २७ | 'शुभाशुभपथाधिकौ' |
| | ,, | 'गन्धर्वाद्यास्तदन्तरा' |
| १४५ | १७ | 'वेदोज्झांस्तान्' |
| | ,, | 'इति च माधुच्छन्दस–' |
| | १८ | 'अन्यथा तु तामसा इत्ये–' |
| | २२ | 'ततो नित्यश्च' |
| | २३ | 'देवसर्गस्ततो हि यः' |
| १४६ | १ | 'वेदो धर्ममूलम्। तद्विदां च स्मृतिशीले इति हि' |
| | २ | 'इति भागवते' |
| | १४ | 'डम्भाहङ्कार–' |
| | २१ | 'ज्ञायन्तेऽन्येऽन्य इति' |
| | २३ | 'तमोगानां च मोक्षिणाम्' |
| | २६ | 'दैवतोत्तमे' |
| १४७ | ५ | 'पक्ता भवन्ति' |
| | १० | 'सममेव वा' |
| | १३ | 'यजन्तो ये' |
| | १५ | 'डम्भाहङ्कार—' |
| | १६ | 'सर्वदेहस्थान्' |
| १४८ | १३ | 'इति ह्यभिधानम्' |
| | १५ | 'इति हि भाल्लवेय—' |
| | १६ | 'कथमन्यथा' |
| | १९ | 'सुखं तु दीर्घसुखदम्' |
| | २६–२७ | 'राजसं नरलोकगाः' |
| | २७ | 'निषिद्धकर्म कुर्युश्चेदीयुष्टे' |
| | २८ | 'स्वाभाविकी पुनः' |
| १४९ | १३ | 'ओं तत्सदित्यादिना' |
| | २३ | 'विष्णौ प्रसिद्धत्वात्' |
| | २४ | 'अनोङ्कृतमासुरं कर्मेत्यादिश्रुतेः' |
| | २७ | '—पूर्वकर्मण एव' |
| १५१ | १९ | 'इति व्यासस्मृत्यादिविरोधः' |
| | २९ | 'स्वाध्यायोऽन्यानामुपवासादि—' |
| १५२ | १३ | 'साङ्ख्यकृतान्ते' |
| | १६ | 'केवलमानसम्' |
| | १८ | 'इति शब्दतत्त्वे' |
| | २५ | 'फलानपेक्षयाऽव्यकरण— ' |
| १५३ | १ | 'स हि कर्तेत्युक्तम्' |
| | ३ | 'पूर्वतनचेष्टाऽपि' |
| | २५–२६ | 'गुणश्च स्यात् सुकर्मजः' |
| | २९ | 'नात्रापि ह्यनवस्था' |
| १५४ | १८ | 'चेष्टा ॥ १८ ॥ गुणसङ्ख्याने ' |
| | २० | 'सर्वजीवेभ्य एव यत्' |
| | २३ | 'साक्षान्मुक्तिकारणम्' |
| | ३० | 'इत्यस्य व्याख्यानं नाना— ' |
| | ३१ | 'मुक्तत्वादिरूपेण करणीयत्वात्' |
| १५५ | २२ | 'पृथक् पृथगपि तामसानीति च' |
| | २३ | 'विरुद्धवादिषु समम्' |
| | २५ | 'मोक्षसाधनत्वस्याकरणे' |
| | २७ | 'ये तु सर्वाणीत्यस्मिन्' |
| | २९ | 'भगवदधीनत्वनिश्चया-देवान— ' |
| १५६ | २८ | 'इति हि भागवते' |
| १५७ | ९ | 'देवेषु वेति' |
| | १२ | 'विप्रा रजसि सात्त्विकाः' |
| | १३ | 'कुटिको वन—' |
| | १६–१७ | 'सात्त्विकमेव तत्' |
| | २७ | 'किञ्चित्प्रीति— ' |
| | २९ | 'सत्त्वप्रधानत्वादेव तानारभ्यो— ' |
| | ३२ | 'पात्रक इति च' |
| १५८ | ९ | 'ब्रह्मकर्म स्वभावजम्' |
| | १४ | 'देवगुणो देवो ज्ञेयो नृतां गत इति ।' |
| | १५ | 'इति वचनाच्च क्षत्रिया— ' |
| | १८ | 'इति हि भागवते' |
| | २२ | 'जीवनार्थमृते सदा, |

| पृष्ठम् | पङ्क्तिः | प्राचीनपाठः |
|---|---|---|
| १५९ | १४ | 'ब्रह्म प्राप्नोति' |
| | १९ | 'स्वोत्तमानां ते' |
| | २२ | 'विप्रधर्माऽपि' |
| | २७-२८ | 'बलेऽधिको यः' |
| १६० | १७ | 'ब्रह्माख्याया लक्ष्म्याः' |
| | २८ | 'चेतसैव विशेष इत्याह' |
| | २९ | 'प्रत्याहारादि' |
| १६१ | २१-२२ | 'इति चोक्तम् ॥ ६६-७८ ॥ यस्य त्रीण्युदितानि वेदवचने रूपाणि दिव्यान्यलं बट् तद् दर्शतमित्थमेव निहितं देवस्य भर्गो महत्। वायो रामवचोनयं प्रथमकं पृक्षो द्वितीयं वपुर्मध्वो यत्तु तृतीयकं कृतमिदं भाष्यं हि तेन प्रभौ॥ पूर्णा दोष—' |
| १६२ | ७ | 'इत्यादिवचनात्' |
| | १४ | 'इत्याद्युक्तं च।' |
| | १७ | 'अन्यधर्मान् सर्वान् परित्यज्येत्युक्तशेषत्वेनैव सर्व—' |
| १६४ | ८ | 'तृतीयमेष हि कृतो ग्रन्थोऽमुना केशवे' |



किञ्चित् शोधनीयम्

[ सूत्रप्रस्थाने १४४ तमे पत्रे पञ्चदश्यां पङ्क्तौ अनुव्याख्याने— "सुखादुतमः" इति मुद्रितमस्ति। तत्र "सुस्वादुतमः" इति पठनीयम्। एवं टिप्पन्यामपि ]

---

* गीतायामाहत्य श्लोकाः ७०१ * त्रयोदशाध्यायीयप्रथमश्लोकाभावे ७००

धृतराष्ट्रवचनम्—१ श्लोकः

सञ्जयवचनम्—४१ श्लोकाः

अर्जुनवचनम्—८५ श्लोकाः । त्रयोदशाध्यायीयप्रथमश्लोकाभावे ८४

भगवद्वचनम्—५७४ ,,

---

१ यद्यपि पाणिनिनये क्षकारो नाक्षरान्तरम् । तथाऽपि पाणिनिनाऽक्षरसमाम्नायेऽनभिहितस्यापि वैदिकप्रसिद्धस्यात्र परिग्रहणात् तद्वदेव क्षकारस्याप्यागमेषु 'नृसिंहः क्षस्य देवता' इत्यक्षरत्वाभ्यनुज्ञानादत्र प्रत्येकं परिगणना कृता ।